*प्रकाशनम्* -
**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ८५



प्रथममुद्रणम्, ५००० - २००३

मूल्यं - रू. ३०.००

*मुद्रणम्* -
**वागर्थ**
न.रा. कालोनी, बेङ्गलूरु - १९

**ISBN 81-88220-44-2**

**PARIVARTANAM** - A collection of inspiring articles written by Krishna Shastry C.M. Publisher - **SAMSKRITA BHARATI** 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085

Pages - iv + 138 Price - Rs. 30-00 First print - July - 2003
Printed at - Vagartha, N.R. Colony, Bangalore - 560 019

# प्रास्ताविकं किञ्चित्

'परिवर्तनम्' इत्येतत् पुस्तकं भवतां करकमलेषु अर्पयितुं सन्तोषम् अनुभवति संस्कृतभारती । सम्भाषणसन्देशे काले काले प्रकाशितानां चमू कृष्णशास्त्रिवर्यस्य लेखानां सङ्ग्रहः एषः । सङ्ग्रहोऽयं कार्यकर्तृणां दृष्ट्या 'निधिः' एव स्यात् इति भावयामः वयम् ।

कृष्णशास्त्रिवर्येण लिखिताः लेखाः इत्येतस्य श्रवणात् एव बहुभिः ज्ञायते - एतस्य वस्तु किम्, कीदृशाः लेखाः अत्र सन्ति इति । लक्ष्यं, कार्य-पद्धतिः, चिन्तनशैली, व्यवहारप्रकारः, राष्ट्रम्, संस्कृतोन्नतिः, कार्यकर्ता, इत्यादयः अनेके विषयाः एतेषु लेखेषु प्रतिपादिताः । अद्य या संस्कृतस्य दीना स्थितिः दृश्यते तस्य कारणं किम् इति कश्चन लेखः विवृणोति चेत् अपरः लेखः प्रगतिसाधानाय किं करणीयं, कथं चिन्तनीयम् इति विशदयति । वर्तमानस्थितेः विविधानि मुखानि चर्चितानि सन्ति अत्रत्येषु लेखेषु ।

प्रायः तादृशः जनः कोऽपि नास्ति, यश्च अत्रत्यान् लेखान् पठित्वा प्रेरणावान् न भवेत् । एकैकोऽपि लेखः प्रेरणायाः स्रोतः अस्ति । कार्यकर्तृभिः च असकृत् अध्येतव्याः लेखाः एते । अतः एव एतेषां लेखानां सङ्ग्रहाय मतिः कृता ।

वर्तमानस्थितेः दारुणताम् अवगमयितुं, भाविनः कार्यस्य सोपानानि दर्शयितुं, कार्याकार्यभावं विश्लेष्टुम्, अन्यान् कार्यप्रवृत्तान् कारयितुं च एते लेखाः नितरां सर्वोपकारकाः सन्ति । एतादृशी वस्तुतत्त्वज्ञापिका, विम्रष्ट्री उत्फूर्तिदायिनी, विवेक्त्री लेखनी नितरां खलु विरला ?

एतस्य पुस्तकस्य सज्जीकरणे सहकृतवद्भ्यः सर्वेभ्यः समर्प्यन्ते हार्दाः कृतज्ञताः ।

*- प्रकाशकः*

स्वभानुसं ।। आषाढकृष्ण-अष्टमी
२१-०७-२००३

# अनुक्रमणिका

# १. परिवर्तनम्

सर्वे अपि अङ्गीकुर्वन्ति यत् व्यक्तिः परिवर्तनशीला, कालः परिवर्तते, तथा च जगति परिवर्तनानि भवन्ति इति । परन्तु विरलाः एव जनाः जायमानानि परिवर्तनानि अवगच्छन्ति । तेषु अवगच्छत्सु अपि केचन एव भविष्यत्परिवर्तनं पूर्वमेव ऊहितुम् शक्नुवन्ति । तत्रापि अङ्गुलिगणनीयाः एव परिवर्तनं हृदयेन अङ्गीकृत्य स्वजीवने तस्य क्रियान्वयनं कर्तुं शक्नुवन्ति । ये तावत् स्वस्मिन् परिवर्तनम् आनेतुं शक्नुवन्ति ते एव बाह्यजगति अपि परिवर्तनम् आनेतुम् शक्नुवन्ति ।

संस्कृतज्ञाः वयं यदि संस्कृतजगतः बाह्यजगतः च विषये चिन्तयितुम् इच्छामः तर्हि सद्यः अहमदाबादस्थे भारतीय-प्रबन्ध-संस्थाने (IIM-A) 'विप्रो' इत्यस्याः विश्वविख्यातायाः संस्थायाः अध्यक्षेण श्रीमता अजीम् प्रेमजीमहोदयेन कृतं भाषणं पठेम । भाषणस्य सन्दर्भः आसीत् तस्य संस्थानस्य सप्तत्रिंशत्तमः वार्षिकः दीक्षान्तसमारोहः । भाषणस्य केचन भागाः एव अत्र उद्धृताः, प्रत्यनुच्छेदम् अस्मदीया टिप्पणी अपि अनुच्छेदमनु आवरणे प्रदत्ता अस्ति ।

''यद्यपि परिवर्तनम् अनिश्चितता च सर्वदा अस्माकं जीवनस्य भागभूते आस्तां, तथापि चिन्ताकारकः विषयः नाम अतीते वर्षे जातस्य परिवर्तनस्य परिमाणम्, आकस्मिकत्वं च । ये तावत् शान्ते जले उडुपेन प्लवमानाः गच्छन्ति स्म, ते वायुना उडुपात् क्षिप्ताः अभवन् । वाणिज्यस्य तर्काः एव विपरीताः अभवन् । न केवलं वाणिज्यस्य, अपि तु मानवजीवनस्य प्रत्येकम् अंशः अपि परिवर्तनेन प्रभावितः अभवत् । अग्रे यद् भविष्यमस्ति तद् इतोऽपि क्रियाशीलम् अनिश्चितं च । एतस्मिन् अवसरे परिवर्तमाने जगति अस्माभिः प्लवमानैः स्थातव्यं चेत् अस्मदीयानि यानि मार्गदर्शकानि तत्त्वानि सन्ति, तेषां विनिमयं भवद्भिः सह कर्तुम् इच्छामि अहम् । एतानि 'विप्रो'-

मध्ये अस्माकम् अनुभवाधारितानि सन्ति । भवताम् अपि एतानि उपयोगीनि भवेयुः इति चिन्तयामि ।''

(वाणिज्यक्षेत्रं भवतु, विद्याक्षेत्रं, सेवाक्षेत्रं वा भवतु, प्रबन्ध- (Management)तत्त्वानि सर्वत्र अपि समानतया उपयोगीनि । व्यक्ति- विकासः भवतु, संस्था-सङ्घटन-विकासः वा भवतु, विकासतत्त्वानि तु समानानि । अत्र अजीम् प्रेमजीमहोदयेन कथ्यमानाः विषयाः प्रत्येकं संस्कृतज्ञस्य कृते अपि स्वस्य व्यक्तिगतजीवनयशस्वितासम्पादनार्थम् अत्यन्तम् उपकारकाः ।)

**१. परिवर्तनस्य प्रथमलक्षणानि अभिजानातु ।**

परिवर्तनस्य प्रथमलक्षणानां विषये जागरूकः तिष्ठतु । 'परिवर्तनम्' इत्येतद् सर्वेभ्यः समानतया आयाति, केचन एव तु एतद् झटिति एव अवगच्छन्ति इति तु विशेषः । कतिचन परिवर्तनानि झटिति/सहसा/ सपदि एव भवन्ति, परम् अधिकानि मन्दम् अथवा क्रमशः भवन्ति । झटिति जायमानानि परिवर्तनानि शीघ्रमेव सर्वैः ज्ञातानि भवन्ति यतः तानि दृश्यानि भवन्ति, परं क्रमशः जायमानानि मन्दपरिवर्तनानि एव यावत् अतिविलम्बः जातः भवति तावत् अलक्षितानि भवन्ति । भवन्तः सर्वे क्वथति जले तिष्ठतः मण्डूकस्य कथां श्रुतवन्तः स्युः । यदि जलस्य उष्णता सहसा एव वर्ध्यते तर्हि मण्डूकः तद् जानाति, अपि च तत्क्षणे जलात् बहिः कूर्दति । परं यदि उष्णता अत्यन्तं मन्दं वर्धिता, एकवारम् एकं डिग्री इव, मण्डूकः तावत्पर्यन्तं तत् न अवगच्छति यावत् सः मरणान्तिकं क्वथितः भवति । भवता स्वीया एव पूर्वसूचनादात्री व्यवस्था वर्धनीया, या भवन्तं सम्भाव्यपरिवर्तनानि संसूचयेत्, अवधानाकर्षणं कुर्यात् च । परिवर्तनसम्बन्धिविषयेषु पूर्वावगमनं तु पूर्वसज्जताकारकं भवति ।''

(उच्चशिक्षाक्षेत्रस्य निजीकरणं, डिजिटैसेषन्, विश्ववाणिज्यसङ्घ- नियन्त्रणं, सङ्गणकजालम्, विश्वविपणीकरणं, पर्यायचिकित्सापद्धतेः गवेषणम् इत्यादीनां किं संस्कृतोपरि प्रभावः न भविष्यति ?

व्यक्तिजीवनं, समाजजीवनं, राष्ट्रजीवनं च सङ्क्रमणस्थितौ सन्ति। अस्मान् परितः बहुविधानि परिवर्तनानि जायमानानि सन्ति । सूर्योदयात् पूर्वमेव सूर्योदयः भविष्यति इति तस्य लक्षणानि यथा दृश्यन्ते तथा सर्वेषां परिवर्तनानां पूर्वलक्षणानि दृश्येरन् । यदि वयं अवगच्छामः तर्हि तदनुगुणं सज्जतां कर्तुं शक्नुमः । यदि पूर्वसज्जताः न कुर्मः तर्हि वयं कालघटनाधीनाः भवेम, परिस्थित्यधीनाः भवेम । न तु परिस्थितिः, कालः, घटनाः वा अस्माकं नियन्त्रणे भवन्ति ।)

## २. *परिवर्तनस्य पूर्वानुमानं करोतु ।*

''यद्यपि सर्वं सुष्ठु एव प्रवर्तते, तथापि परिवर्तनस्य पूर्वानुभवं करोतु । अधिकांशजनाः परिवर्तनविषये चिन्तयितुं 'यदि किञ्चित् असमीचीनं भवति तर्हि चिन्तयामः' इति भावयन्तः असमीचीनं किञ्चित् प्रतीक्षमाणाः भवन्ति । परन्तु एतत्तु यदा गम्भीरतया अस्वास्थ्यं भवति तदा एव स्वास्थ्य-परीक्षणार्थं वैद्यसमीपं गमनमिव, अथवा यदा भवतः वाहनं पूर्णतः भ्रष्टं भवति तदा वाहनस्य सुष्ठुतायाः यथास्थितिसंरक्षणव्यवस्थायाः चिन्तनमिव वा विद्यते । भविष्यतः साफल्यस्य महत्तमः शत्रुः नाम पूर्वतनं साफल्यम् । यदा सफलः भवति तदा भवान् चिन्तयति यत् 'अहं सम्यगेव कुर्वन् अस्मि, अतः सफलता' इति । परं यदा सफलतायाः मानदण्डाः परिवर्तन्ते तदा पूर्वं यथा, यच्च क्रियते स्म तथा तदेव वा भवन्तं सफलतां नयेद्, कदाचित् न नयेद् अपि । सर्वदा अतिविश्वासतः आत्मानं रक्षतु । अतिविश्वासः इत्येतद् 'किञ्चित् असमीचीनं जायमानम् अस्ति' इति परिवेषाद् लभ्यमानाभ्यः सूचनाभ्यः भवन्तम् अन्धं करोति ।''
(संस्कृतप्रचारकार्यक्रमाः, सम्भाषणशिबिराणि, विद्यालयीयपाठ्य-पुस्तकानि, पाठशालामहाविद्यालयीयपाठ्यक्रमाः - एते सर्वे सुष्ठु सन्ति इति वयं चिन्तयन्तः स्याम । परम् अद्यत्वे जनानां रुचेः विषयाः परिवर्तमानाः सन्ति । स्वेन यद् अपेक्षितं, यावद् अपेक्षितं तद् केवलं तावन्मात्रं च पठितुम् इच्छन्ति ते । जनानाम् इच्छासु आनुकूल्येषु आद्यतासु च जायमानपरिवर्तनानुसारं वयं कार्यक्रमान् पाठ्यक्रमान् च सज्जीकुर्वन्तः

स्मः किम् ? दूरस्थशिक्षा जनाकर्षिका जायमाना अस्ति । किं तदनुगुणं वयं कार्यतन्त्रं चिन्तितवन्तः ? सान्ध्यकक्ष्याः प्रचारपथे सन्ति । किं संस्कृतस्य सान्ध्यविद्यालयाः आरब्धाः ?)

### ३. *परिवर्तनकाले अवसरान् पश्यतु ।*

''परिवर्तनावसरे विद्यमानान् अवसरान् पश्यतु । परिवर्तनस्य निर्वहणं (लाभस्वीकरणम्) इत्येतद् तत्सम्बन्धे अस्मदीयां दृष्टिम् अवलम्बते । तद् प्रख्याताम् 'अर्धं पूर्णः अर्धं रिक्तः चषकः' इति दृष्टिं दर्शयति । परिवर्तनसम्बद्धायाः प्रत्येकं समस्यायाः अनु तत्र कश्चन अवसरः अपि निहितः भवति । अयं तु भवदधीनः विषयः यद् तम् अवसरं भवान् प्रथमं जानीयात्, यावद् अन्यः कश्चन तं ज्ञास्यति ।''

(कयाचित् पादत्राण-उत्पादकसंस्थया दूरदेशं प्रति स्वीयविक्रयण-प्रतिनिधिद्वयं भिन्नभिन्नसमये प्रेषितम् । प्रथमः प्रतिनिधिः गत्वा दृष्टवान् । तस्मिन् देशे केऽपि पादत्राणं न धरन्ति स्म । अतः स्वस्य केन्द्रकार्यालयं प्रति सः तन्त्रीवार्तां प्रेषितवान् यत् 'अत्र केऽपि पादत्राणं न धरन्ति इत्यतः अत्र तेषां विक्रयणमेव न भवेत्, अतः एतद्देशनिमित्तं क्रियमाणम् उत्पादनं स्थगयतु' इति । द्वितीयः प्रतिनिधिः अपि तत्र गत्वा दृष्टवान् । जनाः पादत्राणमेव न धरन्ति ! तेनापि तन्त्रीवार्ता प्रेषिता । परन्तु इत्थम् – 'अत्रत्यैः जनैः पादत्राणानि न दृष्टानि एव, अतः अत्र तेषां विक्रयणस्य महान् अवसरः अस्ति, उत्पादनं द्विगुणितं करोतु' इति !

जनाः संस्कृतसमीपं, संस्कृतविद्यालयं नागच्छन्ति चेत् संस्कृतमेव जनसमीपं नयतु । एन्.सि.ई.आर्.टि. – इत्यस्य नूतनपाठ्यचर्यायां संस्कृतस्य स्थानं नास्ति इत्येषा समस्या चेत् ताम् एव समस्यां संस्कृतज्ञेषु जागर्तिम् आनेतुं, संस्कृतच्छात्रेषु प्रेरणाज्वालां प्रखरां कर्तुं, संस्कृतानुरागिषु विद्यमानम् अनुरागं क्रियारूपेण परिवर्तयितुं च अवसरत्वेन उपयोक्तुं प्रयतताम् । पाठ्यपुस्तकानि पुरातनानि, बहुवर्षेभ्यः अपरिष्कृतानि इति समस्या चेत् तामपि तत्परिष्कारपुनर्लेखनव्याजेन शिक्षणविधौ परिवर्तनम् आनेतुं, संस्कृतस्य संस्कृतमाध्यमेन पाठनाय, संस्कृतज्ञानां गुणवत्तावर्धनाय च

प्राप्तः अवसरः इति जानातु ।)

### ४. *नियतचर्याः न भवेयुः शृङ्खलाः ।*

''नियतचर्याः (routine) अस्माकं शृङ्खलाः न भवेयुः । परिवर्तनस्य अवरोधकरणे अस्माकम् अभ्यासः अस्ति । नियतचर्याः अस्माकं सुखवलयं प्रतिनिधीकुर्वन्ति । नियतचर्याफलानि पूर्वानुमेयानि भवन्ति । ताः अस्माकं समयं चिन्तनरीतिं च केनचित् निश्चितरूपेण शृङ्खलाभिः नियमितवत्यः बद्धवत्यः च भवन्ति । यद्यपि नियतचर्याः उपकारिकाः, तथापि ताः यथा भवन्तं दासं न कुर्युः तथा जागरूकः भवतु । समये समये उद्देश्यपूर्वकमेव नियतचर्यां भञ्जयित्वा ततः बहिः आगच्छतु ।''

(संस्कृतस्य पाठनविधिं पश्यतु । शताधिकवर्षेभ्यः अनुवादमाध्यमेन एव वयं संस्कृतं पाठयन्तः स्मः । रटनविधिम् अनुवादविधिं च विहाय अन्यविधिना पाठनस्य प्रयोगकरणं किमर्थं न चिन्तयेम ? नियतचर्यारूपेण प्रतिवर्षं तथैव पाठनम् अस्माकं शिक्षकाणां सुखाय स्यात् ! परं संस्कृतविकासार्थं वयं तस्मात् सुखवलयतः बहिरागच्छेम । तदर्थं पाठनस्य नियतचर्यातः बहिः आगमनाय वर्तमानचिन्तनपरिधितः बहिः आगच्छेम । नूतनप्रकारेण, नूतनस्थाने स्थित्वा, नूतनदृष्ट्या पश्येम ।)

### ५. *अज्ञातस्य विषये भयं सहजम् ।*

''अज्ञातस्य विषये भयं सहजम् इति जानातु । परिवर्तनेन सह काचित् असुरक्षिततायाः भावना आयाति । बहवः जनाः विश्वसन्ति यत् धैर्यवन्तः जनाः एतया भावनया न बाधिताः इति । परं सत्यं भिन्नमेव अस्ति । प्रत्येकम् अपि जनः अज्ञातविषयकं भयम् अनुभवत्येव । धैर्यं नाम भयस्य अभावः न, अपि तु 'पक्षवातपीडितः' अभूत्वा भयस्य 'निर्वहणं' कर्तुम् अपेक्षितं तस्य सामर्थ्यम् । भयम् अनुभवतु, परन्तु तथा सत्यपि अग्रे सरतु ।''

### ६. *आत्मानं परिष्करोतु, नवीकरोतु च ।*

''आत्मानं परिष्कुर्वन् नवीकुर्वन् च भवतु । एतद् भवन्तं परिवर्तनम्

ऊहितुं परिवर्तने आगते सति सज्जेन भवितुं च सज्जीकरोति । निरन्तरम् आत्मानं पृच्छतु – 'कानि नूतनानि कौशलानि सामर्थ्यानि च आवश्यकानि भवेयुः ?' इति । तद्विषये कार्यकरणस्य अपि आरम्भं तस्मात्पूर्वमेव करोतु, यदा तानि आवश्यकानि इति स्थितिः आयाति । एतेन इतरेषामपेक्षया भवतः एव सहजः लाभविशेषः भवेत् । भवतः शिक्षणस्य महत्तमः लाभः न केवलं यद् भवता अधीतं तस्मात् अस्ति, अपि तु कथम् अध्येतव्यम् इति अध्ययने अस्ति । मया बहुभिः युवभिः मिल्यते ये चिन्तयन्ति यत् 'यद्यद् अध्येतव्यम् अस्ति तद् सर्वमपि अधीतम्' इति । भवता निरन्तरं जनानां विषये अध्येतव्यम् । तैः सह प्रभाविरूपेण कथं संवादः करणीयः इति विषयेऽपि अध्येतव्यम् । श्वस्तने जगति ते एव जनाः संस्थाः वा सफलाः भवेयुः ये तावत् त्वरिताध्ययनस्य निरन्तराध्ययनस्य च कौशलम् आत्मसात्कृतवन्तः स्युः ।''

### ७. *भवतु उन्मुक्तमनसां सङ्गः ।*

''आत्मानं तैः जनैः परिवारितं करोतु ये परिवर्तनाय उन्मुक्तमनसः सन्ति । यदि भवान् सर्वदा अभावचिन्तकस्य अभावभाषिणः वा सहवासे भवति तर्हि भवान् अपि शीघ्रमेव तादृशजनः इव भवेत् । अभावचिन्तकः किञ्चित् कार्यं 'किमर्थं कर्तुं न शक्यते' इत्यस्य सर्वाणि अपि कारणानि जानाति । तदपेक्षया 'कर्तुं शक्यते' इति चिन्तकैः जनैः सह अधिकं समयं यापयतु । योग्यान् एव मार्गदर्शकान् सम्यक्प्रकारेण चिनोतु । निराशावादः साङ्क्रामिकः । उत्साहः, आशावादश्चापि तथैव । वस्तुतः उचितः आशावादः आश्चर्यकररूपेण महान् शक्तिवर्धकः भवेत् ।''

### ८. *भवतु जयप्राप्त्यर्थं क्रीडा ।*

''जयप्राप्त्यर्थं क्रीडतु । अहम् एतद् इतःपूर्वं बहुवारम् उक्तवान् अस्मि । जयार्थं क्रीडनम् इत्येतद् सामान्यरूपेण कार्यकरणं न । यदा भवान् जयार्थं क्रीडति, तदा भवान् सर्वशक्तेः प्रयोगं करोति, शरीरं सम्पूर्णतः विस्तारयति (नखशिखान्तं क्रीडति !) एतत् तत्त्वं भवान् यस्मिन् विषये प्रभावं जनयितुं शक्नोति तस्मिन् अवधानं कर्तुं भवतः साहाय्यं कुर्यात्,

अन्यथा भवान् यद् परिवर्तनं कर्तुं न शक्नुयात् तस्य चिन्तायां लिप्तः सन् लज्जमानः तिष्ठेत् ।''

## १. *आत्मगौरववान् भवतु ।*

''भवतः सफलतायै जगत् भवतः आदरं कुर्यात् । साफल्यस्य किमपि विवरणम् अपेक्षितं न भवति । तथा च वैफल्येन तु विवरणं न अनुमन्यते । परं भवतः आत्मगौरवभावना तावती अपेक्षिता यत् सफलता वा भवतु, विफलता वा, तेन भवतः आत्मविश्वासः कदापि नष्टः न भवेत् । यदि भवान् १०% अवसरेषु सफलः भवति तर्हि भवान् सम्यगेव कुर्वन् अस्ति इति मन्तव्यम् । यदि भवान् सर्वदा शतप्रतिशतं सफलः एव भवति तर्हि भवता स्वमुद्दिश्य प्रश्नः कर्तव्यः यत् 'मया पर्याप्तमात्रेण अपायाह्वानं (risk) स्वीक्रियमाणम् अस्ति, उत न ?' इति । यदि भवान् पर्याप्तमात्रेण अपायाह्वानं स्वीकुर्वन् नास्ति तर्हि भवान् बहून् अवसरान् त्यक्तवान् इत्यर्थः । सम्यक् चिन्तयतु, परन्तु महत् पदं निक्षिपतु । यदि कश्चन दोषः भवति, तर्हि ततः पाठं पठतु । अहं किञ्चित्कालपूर्वम् एतां रोचककथां श्रुतवान् –

'कस्मिंश्चित् दिने कस्यचित् कृषकस्य गर्दभः कस्मिंश्चन कूपे पतितः । सः पशुः कतिपयघण्टाः यावत् दीनतया रुदन् आसीत् यदा सः कृषकः किं करणीयम् इति चिन्तयति स्म । अन्ते सः निर्णीतवान् यत् 'एषः गर्दभः तु वृद्धः, कथञ्चित् कूपः तु पूरणीयः अस्ति एव । गर्दभस्य उन्नयनं न तावत् फलदायकम्' इति । सः स्वस्य प्रातिवेशिकान् सर्वान् साहाय्यं कर्तुम् आहूतवान् । ते सर्वे कुद्दालकं खनित्रं वा गृहीत्वा आगतवन्तः । कूपे मृत्तिकां क्षेप्तुम् आरब्धवन्तः । आरम्भे तु गर्दभः किं प्रचलत् अस्ति इत्येव न ज्ञातवान् । अपि च उच्चैः रोदनम् आरब्धवान् । अनन्तरं सर्वेषाम् आश्चर्यम् आसीत् यत्, सः शान्तः जातः । किञ्चिन्मृत्तिकाक्षेपणानन्तरं कृषकः यदा अधः दृष्टवान् तदा तेन यद् दृष्टं तेन सः विस्मितः जातः । प्रत्येकवारमपि मृत्तिका यदा स्वस्य पृष्ठे पतति तदा सः गर्दभः किञ्चित् अद्भुतं कार्यं करोति स्म । सः स्वशरीरं

कम्पयति स्म, किञ्च एकं पदम् उपरि स्थापयति स्म । यथा यथा जनाः मृत्तिकां पूरयन्ति स्म तथा तथा गर्दभः मृत्तिकां शरीराद् अधः पातयित्वा पादान् उपरि स्थापयति स्म । शीघ्रमेव सर्वेऽपि अत्यन्तम् आश्चर्यभरिताः अभवन् यतः गर्दभः कूपस्य भित्तेः उपरितनपार्श्वे पादं निक्षिप्य बहिरागत्य पलायितवान् आसीत् ।

जीवनं भवतः उपरि सर्वविधमालिन्यं क्षिपेत् । कौशलं नाम भवता तेन अधः पातितेन न भवितव्यम् । वयं गभीरतमकूपेभ्यः अपि बहिः आगन्तुं शक्नुयाम - अस्थगनेन, प्रयत्नस्य अत्यागेन च । मालिन्यम् उज्जहातु ! पदमेकम् उपरि निदधातु !''

### १०. *सत्सु अपि परिवर्तनेषु अपरिवृत्तः तिष्ठतु ।*

''आत्मानं परितः सर्वविधपरिवर्तनेषु सत्सु अपि अहं केषु विषयेषु परिवृत्तः परिवर्तितः च न भविष्यामि इति निर्णयं करोतु । भवतः आधारभूतानि, मूलभूतानि, प्राणभूतानि च तत्त्वानि कानि इति निर्णेतुं समयं स्वीकरोतु । परम् एकवारं निर्णयानन्तरं तेषु विषयेषु केनापि कारणेन सन्धिं मा करोतु । निष्कपटता (Honesty) एकं तादृशं तत्त्वम् !''

''अन्ते अस्माभिः स्मर्तव्यं यत् परिवर्तमाने जगति साफल्यं नाम अवस्थितिमात्रं, यथास्थितिरक्षणमात्रं वा न इति । सर्जनं, येन जगता अस्मभ्यं बहु दत्तं तस्मै जगते किञ्चित् प्रदानं च अस्माकं परमं कर्तव्यम् । अस्माभिः स्मर्तव्यं यत् अस्माकं सफलतायाः कृते बहुभिः सहकारः कृतः अस्ति । मातापितृभिः समाजस्य बहुभिः च । अस्माभिः यथा अवसराः प्राप्ताः, यथा वा सम्पत्तिः आसादिता तथा अप्राप्तावसराणां जनानां कृते एतद् राष्ट्रं समीचीनतरम् आश्रयस्थानं यथा स्यात् तथा करणम् अस्माकमेव सर्वेषाम् उत्तरदायित्वम् । वयम् अस्मदीयं कर्तव्यभागं कुर्मः । यतः एकस्यापि उत्तमकार्यस्य यत्किञ्चिदपि करणं न केवलम् अस्माकं कृते, अपि तु अन्येभ्यः बहुभ्यः अपि तद् बहुगुणं लाभदायकम् । मया सद्यः श्रुतया कथया भाषणं समापयिष्यामि या कथा पूर्वोक्तविचारं सम्यक् बोधयति -

''एषा कथा कस्यचिद् स्काट्लेण्ड्देशीयस्य कृषकस्य कथा, यस्य नाम आसीत् फ्लेमिङ्ग इति । कस्मिंश्चित् दिने सः कुटुम्बनिर्वहणाय क्षेत्रे किमपि कार्यं करोति स्म । तदा सः नातिदूरात् शुनकसमीपाद् क्रन्दनध्वनिं श्रुतवान् । सः स्वीयानि कृष्युपकरणानि तत्रैव परित्यज्य शुनकसमीपं धावितवान् । तदा तत्र सः मलिनकृष्णपङ्के कटिपर्यन्तं निमग्नं, भीतं, बहिरागन्तुं प्रयतमानं रुदन्तं बालं दृष्टवान् । फ्लेमिङ्गः मन्द-वेदनाकर-मरणात् तं बालं रक्षितवान् । अनन्तरदिने कश्चन सुशोभितः शकटः फ्लेमिङ्गस्य गृहपरिसरम् आगतः । कश्चन सुष्ठुवेषभूषितः महाजनः शकटाद् अवतीर्य फ्लेमिङ्गेन रक्षितस्य बालस्य पिता इति आत्मानं परिचायितवान् । उक्तवान् च - ''अहं भवतः प्रत्युपकारं कर्तुम् इच्छामि ।'' ''अस्तु'' इति कृषकः अभिमानेन उत्तरं दत्तवान् । आगतेन उक्तम् - ''अहं भवतः पुत्रं नेष्यामि । तस्मै उत्तमं शिक्षणं दास्यामि च । यदि सः भवान् इव निष्कपटः अस्ति तर्हि कश्चन महापुरुषः भवेत्, यस्य विषये भवान् साभिमानः भवेत् ।''

किञ्च सः तथा कृतवान् अपि । समये अतीते, कृषकस्य फ्लेमिङ्गस्य पुत्रः लण्डन्नगरस्थे सैण्ट् मेरीस् वैद्यकीयमहाविद्यालये स्नातकः भूत्वा अग्रे पेन्सिलिन्-औषधस्य आविष्कर्ता सन् 'अलेक्साण्डर् फ्लेमिङ्ग' इति जगति सर्वत्र विख्यातः अभवत् । केषाञ्चित् वर्षाणाम् च अनन्तरं फ्लेमिङ्गपुत्रस्य शिक्षणव्यवस्थां कृतवतः तस्य महाजनस्य एव निमोनियारोगः जातः । केन औषधेन सः रक्षितः ? पेन्सिलिन्द्वारा ! एतद् कथायाः अन्त्यं न । सः महाजनः आसीत् लार्ड राण्डोल्फ चर्चिल् । तस्य पुत्रस्य नाम आसीत् विन्स्टन् चर्चिल् !

''अस्माकं सर्वामपि प्रतिभां सामर्थ्यं शक्तिं च राष्ट्रे समृद्धिं, शान्तिम्, आनन्दं च आनेतुम् उपयुञ्ज्महे ।''



[सम्भाषणसन्देशः - जनवरी, २००३]

# २. साधयतु अथवा विनश्यतु

सङ्कटम् अवसरस्य जन्म ददाति । चीनीभाषायां 'सङ्कटम्' इति शब्दः अपायावसरयोः उभयोः शब्दयोः यानि अक्षराणि भवन्ति तेषाम् अक्षराणांयोजनेन निर्मितः भवति । (चीनीभाषायां सङ्कटार्थं विद्यमानस्य शब्दस्य अक्षराणां द्विधा विभागः क्रियते चेत् पूर्वार्धस्य अर्थः भवति 'अपायः' इति, उत्तरार्धस्य 'अवसरः' इति ।) अन्तर्बाह्यसमस्याग्रहणग्रस्तस्य संस्कृतस्य वर्तमानः सङ्कटकालः तु सद्यः स्वीयम् अतिभयङ्करं रूपं धृत्वा आगतवान् अस्ति । यद्यपि तद् अस्मान् न्यस्तायुधान् प्रत्यङ्मुखान् च कर्तुम् अपर्याप्तं, तथापि तत् अस्माकं बुद्धिं तु विमूढयति !

सङ्कटम् आन्तरिकं बाह्यं चेति द्विविधम् । तदपि पुनः प्रत्येकं द्विधा । एवं च आहत्य चत्वारि । यद्यपि बहुविधाः समस्याः सन्ति, तथापि प्रधानतया सद्यःस्थितौ एतानि चत्वारि अवधातव्यानि - आन्तरिके - १. ज्ञानस्य ह्रासः २. चिन्तनदृष्टिः चेति । बाह्ये - १. निजीकरणम् २. वैश्वीकरणं चेति । कस्यचिदपि समाजस्य उन्नतिः पुरोगतिश्च तस्य समाजस्य सङ्कटानां सम्मुखीकरणसामर्थ्यम् (ability to respond to the challenges) स्वपरिवर्तनसामर्थ्यं च (ability to adapt) अवलम्ब्य भवति । वर्तमानसङ्कटानां विषये संस्कृतस्य, संस्कृतज्ञानां, संस्कृतजगतः वा प्रतिस्पन्दनं कीदृशं, कियत् इत्येतद् संस्कृतस्य भविष्यं निर्धारयति ।

**ज्ञानस्तरस्य ह्रासः**

तिरुपतिस्थस्य राष्ट्रियसंस्कृतविद्यापीठस्य भूतपूर्वकुलपतिः डा॰ रामानुज-ताताचार्यः चतुश्शास्त्रपण्डितः इति विख्यातः । तादृशाः बहुशास्त्रविशारदाः तु विरलाः एव । (देशे द्वित्राः एव सन्ति ।) एते तादृशाः उच्चकोटिकविद्वांसः,

येषां स्मृतौ एव भवन्ति सर्वे प्रमेयग्रन्थाः लक्षणग्रन्थाश्च, ये च विना व्याख्यानदर्शनं शास्त्रपङ्क्तीनां निगूढम् अर्थं विवरीतुं शक्नुवन्ति । एतादृशाः अक्षरशः अङ्गुलिगणनीयाः जाताः । रामानुजताताचार्यतुल्याः, वाराणसीस्थ-विश्वनाथदाता–रेवाप्रसादद्विवेदी-रामयत्नशुक्लसदृशाः, कर्णाटकस्थाः एन्.टि. श्रीनिवासाय्यङ्गार्य-रङ्गनाथशर्मसदृशाः च ये सन्ति, येषां च वयः सप्ततिवर्षेभ्यः अधिकं स्यात्, तादृशाः महान्तः विद्वांसः देशे उपत्रिंशाः स्युः । तदनन्तरस्तरं पश्यामः चेत् ५०तः उपरितने वयसि विद्यमानाः, व्युत्पन्नाः, स्वशास्त्रेषु अधिकारिणः, पारसनाथद्विवेदी-रामकृष्णमाचार्य-कुटुम्बशास्त्रि-महाबलेश्वर-भट्ट-सो.ति.नागराजसदृशाः त्रिशतं जनाः स्युः । मणिद्रविडशास्त्रि-देवनाथन्-राजारामशुक्लसदृशाः युवानः सन्तोऽपि ज्ञानवृद्धाः अनुपमाः एव, अपवादभूताश्च । एतान् त्रिविधान् जनान् त्यजामः चेत् चतुर्थे स्तरे तु सर्वेऽपि संस्कृतशिक्षकाः प्राध्यापकाश्च अन्तर्भवन्ति ! उपरिनिर्दिष्टानाम् उपत्रिंशजनानाम् उपत्रिशतजनानां च कालः यदा समाप्येत तदा, तन्नाम२०-२५ वर्षाणाम् अनन्तरं, शास्त्राणां का स्थितिः भवेत्, कीदृशं महत् शून्यं निर्मितं भवेत् इति एतं विषयं यदा वयं कुत्रचित् निवेदयामः तदा केऽपि परिस्थितेः गाम्भीर्यं नावगच्छन्ति । न संस्कृतज्ञाः अवगच्छन्ति, न वा सामाजिकाः । संस्कृतज्ञाः तु (ये आत्मानं बहु चिन्तयन्ति) ''अहम् अस्मि खलु' इति भावयेयुः । अतः ते नावगच्छन्ति । तस्मात् न किमपि आश्चर्यं तत्र । सामाजिकाः तु – 'ये तावत् संस्कृतप्राध्यापक-शिक्षकपदेषु सन्ति ते सर्वेऽपि पण्डिताः' इत्येव चिन्तयन्ति, सम्मानयन्ति च । यतः संस्कृतशास्त्रपाण्डित्यं नाम किं भवतीति सामान्याः जनाः किं जानन्ति ? कश्चन संस्कृतश्लोकद्वयं वदति चेदपि पण्डित इति पूज्यते खलु लोके ! किम् अधिककथनेन, अहं यः संस्कृतेन चत्वारि वाक्यानि केवलं वदामि (उच्यमानं शुद्धम् अशुद्धं वा इति श्रोता न चिन्तयति । सः संस्कृतं न जानाति खलु !) सोऽहं नाम्ना केवलं शास्त्री समाजनेत्रयोः पुरतः महापण्डितः !! जनाः किं जानन्ति – मम अन्तः किमपि नास्ति इति ? आगामिषु २०-२५ वर्षेषु ज्ञानस्तरस्य कश्चन महान् ह्रासः, महान् स्तरपातः, महत् अन्तरं च निर्मितं भवेत् । अतः

आगामिन्याः परिस्थितेः विषये अस्माभिः बहु गम्भीरतया चिन्तनीयम् । वयम् अद्य यस्यां दुर्दशायां स्मः सा अद्यतनी ह्यस्तनी वा निर्मितिः न । २५ वर्षेभ्यः पूर्वं, ५० वर्षेभ्यः पूर्वं वा यानि कार्याणि करणीयानि आसन् तेषाम् अकरणस्य फलम् अद्य उपभुञ्जानाः स्मः । तस्माद् अद्य वयं यद् यद् कुर्याम तस्य तस्य फलं २०-२५ वर्षाणाम् अनन्तरं, ५० वर्षाणाम् अनन्तरं वा द्रष्टुं शक्नुयाम ।

न केवलं पण्डितपरम्परायाः (तन्नाम ज्ञानपरम्परायाः) ह्रासः, अपि तु संस्कृतशिक्षाजगति शिक्षकाणां छात्राणां पाठ्यक्रमाणां चेति सर्वेषामपि, आहत्य सामान्यस्यापि ज्ञानस्तरस्य, ह्रासः जातः अस्ति । यत्र उपजीविकार्थं प्रमाणपत्रमेव लक्ष्यं भवति तत्र ज्ञानं गौणमेव भवति । यत्र मठस्य कार्याणि कर्तुं बालाः आवश्यकाः भवन्तीत्यतः संस्कृतपाठशालायाः छात्रावासस्य च सञ्चालनं क्रियते, यत्र अध्यापकस्य वृत्तिरक्षणाय कुतश्चित् छात्राः आनीयन्ते, यत्र छात्रैः किमपि पठनीयमित्यतः संस्कृतविषयं स्वीकृत्य स्नातककक्ष्याप्रवेशं स्वीकृत्य पठ्यते, तत्र सर्वत्र ज्ञानस्तरह्रासं विना किम् अन्यत् भवेत् ? एते एव अग्रे यदा शिक्षकाः भविष्यन्ति तदा किमन्यद् भविष्यं निरीक्षितुं शक्येत ? तस्माद् 'संस्कृतशिक्षकः' 'संस्कृतच्छात्रः' 'संस्कृतप्राध्यापकः' इत्यादीनि नामानि, यथा 'त्रिवेदी' 'चतुर्वेदी' 'क्षीरसागरः' 'शास्त्री' इत्यादीनि जनानां नामानि सन्ति तथैव जायमानानि सन्ति ।

तर्हि एतस्य परिहाराय कः उपायः ? शास्त्रपरम्परारक्षणाय सद्यः कतिचन उपक्रमाः चिन्तयितुं शक्याः । यथा -

१. प्रतिभावतः छात्रान् (ये दशमकक्ष्यायां द्वादशकक्ष्यायां वा प्रथमश्रेण्याम् उत्तीर्णाः तादृशान् एव) चित्वा तेषाम् अध्ययनाय पर्याप्तमात्रेण छात्रवृत्तेः व्यवस्थां कृत्वा उत्तमव्युत्पन्नपण्डितसकाशात् अध्ययनाय ते योजनीयाः ।
२. वर्तमानेषु संस्कृतविद्यालयमहाविद्यालयेषु अधीयानेषु संस्कृतच्छात्रेषु बुद्धिमतः च्छात्रान् अभिज्ञाय तेषु शास्त्रसंरक्षणमेव जीवनमिति जन्मसार्थक्यमिति च ध्येयवादं पूरयित्वा तेषां विशेषव्यवस्था चिन्तनीया ।
३. एकैकस्मिन् अपि राज्ये वास्तविकपण्डितानां सहचिन्तनाय, शास्त्रचर्चार्थं,

सहाध्ययनार्थं च व्यवस्थाः कल्पनीयाः ।

४. शलाकापरीक्षा (राष्ट्रियसंस्कृतसंस्थानस्य), तेनालिपरीक्षा (शृङ्गेरीमठस्य), वेदभाष्यपरीक्षा (काञ्चीमठस्य) इत्यादीनां परीक्षाणां कृते छात्राणां सज्जीकरणम् ।

५. व्युत्पन्नयुवपण्डिताः वृद्धपण्डितानां सकाशं गत्वा स्वशास्त्रविषये शास्त्रान्तरविषये वा यथा विशेषाध्ययनं कुर्युः तथा वेतनसहितस्य अध्ययनविरामस्य व्यवस्था ।

६. सेवानिवृत्तपण्डितानां द्वारा सायङ्कालीनाः कक्ष्याः ।

७. विरामदिनेषु शास्त्रशिबिराणि ।

८. प्रारम्भतः एव संस्कृतमाध्यमेन पाठनाय विशिष्टविद्यालयानां स्थापनम् ।

९. तत्र तत्र स्वेच्छया शास्त्राध्ययनं कुर्वतां गणानां रचना ।

१०. अध्येतृभ्यः अपेक्षितानां ग्रन्थानां व्यवस्थापनम् इत्यादि ।

संस्कृतशिक्षाजगतः स्तरवर्धनाय संस्कृतस्य पाठनविधिपरिवर्तनं, महता प्रमाणेन शिक्षकाणां प्रशिक्षणं, पाठ्यपुस्तकानां परिवर्तनं च इत्येते एव उपायाः, नान्यः पन्थाः विद्यते । सर्वेषामपि एकबिन्दुलक्षितकार्यं (One point agenda) स्यात् - संस्कृतशिक्षणे गुणवत्ता – अर्थात् संस्कृतशिक्षकच्छात्रज्ञानस्तरवर्धनम् इति । भाषायाः प्रयोगकौशलकेन्द्रितम् (भाषण-लेखनकौशलकेन्द्रितं) शिक्षणम् आनीयते चेत् गुणवृद्धिः भवति एव । सर्वेषु संस्कृतच्छात्रेषु विद्यालय-विश्वविद्यालय-पाठशालेति सर्वकक्ष्यासु अधीयानेषु मम निवेदनं यत् - भवन्तः स्वीयम् अध्यापकं प्राध्यापकं चापि सविनयं सानुरोधं च निवेदयन्तु यत् संस्कृतमाध्यमेन पाठयतु इति ।

## दृष्टिः

अपरं सङ्कटं – संस्कृतज्ञानाम् अस्माकं दृष्टेः विषये, यस्याः च कारणतः इदानीं स्वातन्त्र्यप्राप्तेः ५० वर्षाणाम् अनन्तरं वयं मार्गस्य अन्तं (Dead End) प्राप्नुवन्तः स्मः, यस्याः च दृष्टेः कारणतः संस्कृतजगति हताशता, भाषणपरता, अभावात्मकता, अकर्मण्यता, नञ्बहुलता इत्यादयः अर्बुदरोगायन्ते, यस्याः च दृष्टेः कारणतः अद्यावधि अस्माभिः बहु किमपि

न साधितम्, यस्याः परिणामतः वयम् अद्य किङ्कर्तव्यताविमूढाः अभवाम । आश्रयणीयान् मार्गान् न जानीमः, परिस्थितेः निर्वहणं कथं करणीयमिति (How to handle the situation इति) न जानीमः । एतादृशी विचित्रा स्थितिः प्राप्ता अस्ति अस्माभिः । सा दृष्टिः एव अस्ति – 'सर्वकारेण ....... करणीयम्' इति । वयं ५० वर्षाणि सम्पूर्णतया सर्वकारावलम्बनं कुर्वन्तः पञ्चतन्त्रस्थवृषभशृगालकथावत् प्रतीक्षां कृतवन्तः । (वृषभस्य वृषणं यदा पतेत् तदा खादेयम् इति प्रतीक्षमाणः शृगालः वृषभम् अनुसरन् गतवान् इति तु कथासारः ।) अन्ते वयं न किमपि प्राप्तवन्तः, न कुत्रापि प्राप्तवन्तः । अतः अस्माभिः अस्माकं दृष्टिविषये पुनश्चिन्तनं करणीयम् ।

किञ्चन उदाहरणं दर्शयामि । सद्यः कर्णाटके संस्कृतशिक्षकैः कार्यकर्तृभिश्च सह मम मेलनम् आसीत् । तेषु कश्चन संस्कृतशिक्षकः, यः तावत् स्वविद्यालये संस्कृतरक्षणाय, स्वनगरे संस्कृतप्रचाराय च परिश्रमं करोति, यस्य च विषये मम आदरः अस्ति, सः वदति स्म – 'कर्णाटके शिक्षकप्रशिक्षणमहाविद्यालये प्रवेशाय प्रवेशार्थी दशमकक्ष्यायां कन्नडभाषामेव पठितवान् स्यात्, न तु संस्कृतम् इति कश्चन नियमः अस्ति, अस्माकं विद्यालये प्राचार्यः संस्कृतं निष्कासयितुम् इच्छन् तं नियमं प्रदर्श्य छात्रान् भाययित्वा संस्कृतात् दूरं नयति, अतः राज्यस्तरे अधिकारिणा सह, मन्त्रिणा सह वा वार्तालापं कृत्वा तस्य नियमस्य परिवर्तनं कार्यते चेत् न केवलम् अस्माकं विद्यालयस्य, अपि तु एतादृशानां बहूनां विद्यालयानां लाभः भवेत्' इति । 'प्राचार्यः बोध्यताम्' इत्युक्ते 'सः बहुधा बोधितः, परं दुराग्रहपीडितः सः संस्कृतध्वंसनाय कृतनिश्चयः अस्ति, अतः राज्यस्तरे एव परिवर्तनं करणीयम्' इति अन्ये कार्यकर्तारः अपि उक्तवन्तः । सर्वेषां छात्राणां पितरः विद्यालयप्रबन्धसमितेः प्रमुखाणां सकाशे संस्कृतरक्षणाय अनुरोधं कुर्युः, नगरस्थाः गण्याः अपि तदर्थं पत्राणि लिखेयुः इत्यपि तत्र विचारः आगतः । तथापि, उपरि राज्यस्तरे परिवर्तनं कारयामः चेत् एव एषा समस्या सरलतया परिहृता भवेत् इति आहत्य तत्र तेषाम् अभिप्रायः आसीत् । अत्रैव चिन्तनीयः विषयः अस्ति – 'परिवर्तनं कदा, कथं च आगमिष्यति ? तस्य प्रारम्भः कुतः ? उपरिष्टाद्, उत

अधस्ताद् ?' इति ।

यथा विद्यालयस्तरे प्राचार्यः कश्चन दुर्मतिः उपविष्टवान् तथा तादृशाः सहस्रशः प्राचार्याः संस्कृते अनासक्ताः तत्र तत्र विद्यालयेषु प्राचार्यपदम् अधितिष्ठन्ति (अधिशेरते वा ?) राष्ट्रिय-शैक्षिकानुसन्धान-प्रशिक्षण-परिषदः संस्कृत-राष्ट्रियपरियोजनाद्वारा केन्द्रीयविद्यालयशिक्षकेभ्यः भोपाले सद्यः सञ्चालिते प्रशिक्षणशिबिरे सर्वैः शिक्षकैः एतदेव उक्तं यत् अस्माकं प्राचार्यः संस्कृतानुकूलः नास्ति इति । एतादृशप्राचार्यसदृशाः एव जनाः संस्कृते अनासक्ताः सहस्रशः शिक्षणाधिकारिरूपेण अन्याधिकारिरूपेण वा विविधेषु सर्वकारीयपदेषु तिष्ठन्तः संस्कृतस्य कण्टकायमानाः सन्ति । किम् उपरितनः राज्यस्तरीयः अधिकारी नियमपरिवर्तनं करोति ? सः संस्कृतविरोधी इति कारणतः एव खलु एतादृशं नियमम् आनीतवान् ! यथा विद्यालयस्तरे संस्कृतरक्षणाय नगरस्तरे अभियानं करणीयं भवेत् तथा राज्यस्तरे संस्कृतरक्षणाय राज्यस्तरे ए ेलनं करणीयं भवेत् । एते सर्वे प्राचार्याः, अधिकारिणः, लिपिकाराः, वित्ताधिकारिणः, प्रशासकाः, प्रबन्धकाः, निदेशकाः, आयुक्ताः, सचिवाः... इत्येवं लक्षशः जनाः सन्ति । तेषु यद्यपि अनुकूलाः, तटस्थाः, संस्कृतद्वेषिणश्चेति त्रिधा जनाः सन्ति, तथापि ये संस्कृतस्य विघ्नोत्पादकाः, अकिञ्चित्कराः वा, लक्षशः सन्ति तान् यावत् वयं न जेष्यामः तावत् संस्कृतानुकूलता सम्पादिता न भवेत् । यतः समस्या सा एव - देशे सर्वत्र प्रमुखेषु निर्णायकेषु आधिकारिकपदेषु उपविष्टवन्तः नीति-नियम-विधि-निर्मातारः प्रशासकाः ये सन्ति तेषां संस्कृतविषयिणी मानसिकता । तस्याः मानसिकतायाः परिवर्तनं कथम् ? तदर्थम् अस्माकं कार्यनीतिः कार्ययोजना च का ?

वयं प्रजातन्त्रस्य मर्म अवगन्तुं किं प्रयत्नं कुर्मः ? प्रजातन्त्रे एकमेव कार्यं साधयति । तदस्ति - 'जनाभिप्रायः' । गुजराते गोधराघटनानाम् अनन्तरं देशे नव मासान् यावत् हिन्दुत्वविरोधि-पत्रकाराः बहु कोलाहलं कृतवन्तः । निर्वाचनपरिणामस्य घोषणस्य अनन्तरम् एव सर्वे ते मौनम् आश्रितवन्तः सन्ति, स्वपुच्छं पुटीकृत्य उपविष्टवन्तः च सन्ति । १९९२तमवर्षस्य

दिसम्बरमासस्य ६ दिनाङ्कपर्यन्तं सर्वेषु अपि समाचारपत्रेषु प्रथमपृष्ठे प्रतिदिनं बाबरीमस्जिद्-एक्शन्कमिटीसदस्यानामेव वार्ताः । दिसम्बरमासस्य षष्ठदिनाङ्कानन्तरं ते सर्वे कस्मिन् लोके लीनाः अभवन् इति भगवान् एव जानाति ! किं संस्कृतज्ञानाम् अस्माकम् एतादृशस्य जनान्दोलनस्य निर्माणस्य साहसचिन्तनं जीवनबद्धता च स्याताम् ? येषां हृदयं हृदयं न, अपि तु अग्निपुञ्जः, येषां मस्तिष्कं मस्तिष्कं न, अपि तु ज्वालामुखी, ते खलु तेजोभास्कराः भारतस्य शतकोटिहृदयेषु शतकोटिमनस्सु च अग्नेः प्रवर्तनं चिन्तयेयुः !

तत्रैव भोपाले केन्द्रीयविद्यालयानां संस्कृत-शिक्षकाणां प्रशिक्षणशिबिरस्य उद्घाटनावसरे मुख्यातिथिः संस्कृतप्राध्यापकः कश्चन उक्तवान् - 'शासनम् इच्छति चेत् सर्वं सिद्ध्यति' इति । आम्, इच्छति चेत् सिद्ध्यति । तत् 'चेत्' कदा आगमिष्यति ? तावत् नैव, यावत् संस्कृतज्ञाः इच्छन्ति, यावत् संस्कृतज्ञाः देशम् उत्थापयितुम् इच्छन्ति । अस्माभिः देशे सा मानसिकता निर्मातव्या, या च संस्कृतं स्वीकुर्यात् । संस्कृतं समृद्धा भाषा इति एकेनैव कारणेन जनाः संस्कृतं न पुरस्कुर्वन्ति । तस्याः उपयोगितायाः विषये, तस्याः पुनर्व्यवहार-भाषाकरणशक्यतायाः विषये च भवान् संस्कृतज्ञः जानाति, परं देशः न जानाति । संस्कृतेन सह भावनात्मकः सम्बन्धः भवतः अस्ति, न तु देशे सः भावः जागरितः । भवतः जीवने तु संस्कृतस्य प्राथमिकता अस्ति, परम् इतरेषां दृष्ट्या सहस्रे विषयेषु, सहस्रे समस्यासु च संस्कृतम् अपि अन्यतमं, न तु प्रथमम् । अतः यावत् वयं संस्कृतज्ञाः देशे सार्वत्रिकरूपेण संस्कृतस्य उपयोगिताबोधनस्य, भावजागरणस्य शक्यताप्रदर्शनस्य, प्राथमिकता-सम्पादनस्य च कार्यं कर्तुं च न इच्छामः तावत् शासनमपि संस्कृताय किमपि कर्तुं न इच्छेत् । शासनतन्त्रं कदापि स्वयं न किमपि कर्तुं प्रवर्तते । समाजस्य बहुभागस्य बलवतः प्रभावस्य (Pressure) कारणतः शासनतन्त्रस्य किञ्चित् प्रणोदनं (Pushing) भवति, तदा किञ्चित् कार्यं भवति ।

अद्य राजनीतिज्ञैः, प्रशासनाधिकारिभिः नीतिनिर्मातृभिः (Policy makers) च संस्कृतं परित्यक्तम् अस्ति । किमर्थम् ? यदर्थं संस्कृतज्ञैः

संस्कृतं परित्यक्तं तदर्थमेव तैः अपि संस्कृतं परित्यक्तम् । यैः कारणैः वयं संस्कृतज्ञाः अस्माकं सुतान् वैद्यान्, अभियन्तॄन्, प्रबन्धविशेषज्ञान्, अधिवक्तॄन्, सङ्गणकतज्ज्ञान् च कुर्मः, तैः एव कारणैः सर्वे सामाजिकाः अपि स्वसुतान् संस्कृतशिक्षणाय प्रेषयन्तः न सन्ति, तैः एव कारणैः भाषारूपेणापि संस्कृतपाठने अनुत्सुकाः, तैः एव कारणैः राजनीतिज्ञाः, प्रशासनाधिकारिणः नीतिकर्तारश्च संस्कृतम् उपेक्षितवन्तः । यैः कारणैः संस्कृतज्ञैः १) परस्परं २) विद्यालये ३) स्वगृहे च संस्कृतेन व्यवहारः परित्यक्तः तैः एव कारणैः जनैरपि संस्कृतव्यवहारः न क्रियते । अतः समाजस्य, देशस्य वा, मूलरोगस्य एव चिकित्सा चिन्तनीया ।

प्रश्नः अस्ति दृष्टेः । तर्हि परिहारः कः ? अस्मासु विचारपरिवर्तनं भवेत् । तथा चेत् कथं चिन्तनं करणीयम् ? चाणक्यतः पाठं पठेम । नन्दवंशनिर्मूलनं कृत्वा धर्मिष्ठं कञ्चित् सिंहासने प्रतिष्ठापयितुं सः कृतसङ्कल्पः आसीत् । (वयं वैदेशिकदुष्प्रभावान्, सामाजिककुरीतीः, दौर्बल्यानि च समूलम् उत्पाट्य संस्कृतभाषां संस्कृतिं च पुनः व्यवहारपथम् आनेतुं कृतनिश्चयाः ।) चाणक्यः प्रारम्भे नन्दविषयकचिन्तां न कृतवान्, शक्तिसम्पादनाय अवधानं दत्तवान् । (वयमपि कञ्चित्कालं सर्वकारचिन्तां पार्श्वे स्थापयामः, शक्तिसम्पादनार्थम् अवधानं दद्मः ।) चाणक्यः भाविराजं धर्मरक्षकं चन्द्रगुप्तम् अन्विष्टवान् । (वयं शास्त्रोद्धारकान् प्रतिभावतः छात्रान् अन्विष्यामः, प्रेरयामः च ।) चन्द्रगुप्तं प्रेम्णा, स्नेहेन, सर्वस्वदानेन च शिक्षितवान् वर्धितवान् च सः । (सर्वाः प्रतिभाः समयं च चितानां शिक्षणाय, वर्धनाय च व्ययीकुर्मः वयम् ।) देशे सर्वत्र प्रवासं कृत्वा जनजागरणं कृतवान् चाणक्यः । (समाजजागरणाय, कार्यसम्पादनाय च अन्यान्यस्थानानि गच्छामः, जिला-राज्य-देश-विदेशेषु प्रवासं कुर्मः च ।) राज्ञां, गणराजानां च सम्पर्कं कृत्वा व्यूहं रचितवान् सः । (प्रभाविजनानां [Influencial persons] सम्पर्कं कृत्वा पोषकसमर्थकबलं वर्धयिष्यामः ।) गुरुकुलेषु विश्वविद्यालयेषु च आचार्यान् छात्रान् च शस्त्राणि ग्रहीतुं, क्रान्त्याः शङ्खं वादयितुं, रणरङ्गं प्रवेष्टुं च सः प्रेरितवान् । (सर्वान् संस्कृतविभागान्, संस्कृतमहाविद्यालयान्

च गत्वा प्राध्यापकान् छात्रान् च प्रचारकार्यं कर्तुं, प्रचारपत्रकाणि वितरीतुं, सम्भाषणदुन्दुभिं वादयितुं, तदर्थं वीथीम् अवतरीतुं च प्रेरयामः ।) नन्दपक्षे विद्यमानान् अमात्यादीन् उत्तमजनान् स्वपक्षम् आनेतुं, तेषाम् उपयोगं कर्तुं च प्रयत्नं कृतवान् चाणक्यः । (सर्वकाररचनायां विद्यमानेषु उत्तमजनान् संस्कृतकार्ये योजयितुं प्रयत्नं कुर्मः वयम् ।) सैन्यानां देशव्यापिरचनां (Network) निर्मितवान् सः । (कार्यकर्तॄणां देशव्यापिसङ्घटनरचना सम्पादनीया अस्माभिः ।) नन्दराज्ये किं प्रचलतीति गुप्तचरेभ्यः समये समये जानाति स्म सः । (सर्वकारपक्षे, संस्कृतविरोधिदलेषु, बाह्यजगति च किं किं प्रचलतीति अवलोकमानाः अवगच्छन्तः भवामः ।) सः अलेक्साण्डरस्य प्रतिरोधं कृतवान् । (बाह्य-सांस्कृतिकाक्रमणेभ्यः देशरक्षणाय वयम् एतदर्थं प्रयत्नं कुर्वद्भिः सह अस्माकं हस्तान् योजयामः ।) शक्तिसम्पादनानन्तरं योग्ये समये अन्तिमयुद्धं घोषितवान् सः । (शक्तिसम्पादनपर्यन्तम् अन्यत् किमपि न चिन्तयामः वयम् ।) चाणक्यस्य लक्ष्यं, रणनीतिः, कार्ययोजना, साधनसङ्ग्रहः, कार्यक्रमाः, अनुशासनं, चारित्र्यम् इत्येवं बहवः गुणाः अस्माकं पथिप्रदर्शकाः भवितुम् अर्हन्ति ।

### निजीकरणम्

केन्द्रसर्वकारेण राज्यसर्वकारैः च पञ्चमवेतनायोगस्य संस्तुतीनां स्वीकृतिः कृता । तदनन्तरम् इदानीं सर्वेषां सर्वकाराणां कोषस्य महत्तमः भागः कर्मचारिणां वेतनाय एव व्ययितः जायमानः अस्ति । ततोऽप्यधिकं नाम, बहूनां सर्वकाराणां समीपे कर्मचारिभ्यः वेतनं दातुं धनमेव नास्ति । एतादृश्यां स्थितौ नूतनतया नियुक्तयः न भवन्ति, यतः सर्वविधनियुक्तीनां स्थगनाज्ञा अस्ति । नूतनपदनिर्माणमपि नास्ति । कर्मचारिसंख्या न्यूनीकर्तव्या इति हेतोः वर्तमानानां निवृत्तेः अनन्तरं रिक्तपदपूरणमपि न भविष्यति । बहुषु राज्येषु इदानीं माध्यमिकविद्यालयेषु, महाविद्यालयेषु च 'संविदा'द्वारा (On contract basis) अध्यापकान् स्वीकुर्वन्ति, स्थायिनियुक्तेः कालः समाप्तः । अतः संस्कृतशिक्षकपदानि दिने दिने विरलानि एव भविष्यन्ति ।

किञ्च इदानीन्तनः कालः भावी कालः च निजीकरणस्य

(Privatisation) कालः । निजीकृतक्षेत्रे तु शिक्षा अपि वाणिज्यक्षेत्रं भवति । किञ्च 'सा विद्या या धनश्रियै' इत्यत्र यथा, तथा धनार्जकाः विषयाः एव मुख्यधारायां तिष्ठेयुः, अन्ये अगण्यरूपेण तिष्ठन्तः प्राणरक्षणमात्रं श्वासोच्छ्वासमात्रं कुर्वन्तः भवेयुः । निजीकरणतः जायमानः प्रथमः आघातः संस्कृतस्य उपरि एव भविष्यति । इदानीन्तनस्य कालस्य अवगणना न करणीया । जायमानस्य परिवर्तनस्य वेगः अनूह्यः । युगपत् एव बहुविधानि परिवर्तनानि जायमानानि सन्ति । तदनुगुणम् एव आत्मानं परिवर्तयेम, अन्यथा विनष्टाः भवेम । (Adapt, or you will perish !)

**वैश्वीकरणम्**

वैश्वीकरणस्य (Globalisation) कारणतः, किञ्च इण्टरनेट्, आई.टि.प्रभृतीनां कारणतः च जगत् एकनीडं जायमानम् अस्ति इति जनाः वदन्ति । अग्रिमे वर्षे विविधदेशानां मध्ये कश्चन सन्धिः भविष्यति । GATS इति तस्य नाम । (General Agreement on Trade in Services) अत्र शिक्षा, स्वास्थ्यम् इत्यादिकं 'Services'नामकः वाणिज्यस्य कश्चन विभागः इति परिगणयिष्यते इत्येषः अस्मत्सम्बद्धः विषयः । 'एतद्विषये चर्चां कर्तुं वयं सज्जाः' इति कृतहस्ताक्षरेषु ३९देशेषु भारतमपि अन्यतमम् । पुनः २००४ तमे वर्षे अन्तिमहस्ताक्षरं भारतेन अपि कृतं चेत् २००५ तमवर्षतः भारतेऽपि सन्धेः क्रियान्वयनं प्रारप्स्यते । सम्भावितसन्धौ शिक्षावाणिज्यं चतुर्विधं भविष्यति । ताः चतस्रः 'रीतयः' 'Modes' इति कथ्यन्ते । ताश्च -

१) सीमातः बहिः वाणिज्यम् (Cross Border Trade)
२) विदेशे उपयोगः (Consumption abroad)
३) वाणिज्योपस्थितिः (Commercial presence)
४) जनानां गमनागमनम् (Natural Movement of persons)

इति ।

एतासाम् आशयः एवं भविष्यति -

१. आक्स्फर्ड्विश्वविद्यालयः भारतीयया कयाचित् वाणिज्यसंस्थया

शैक्षिकसंस्थया वा सह सन्धिं कृत्वा तद्द्वारा आक्सफर्ड्-पाठ्यक्रमस्य प्रमाणपत्रस्य साहाय्येन वाणिज्यं करिष्यति । कश्चन लाभांशः आक्सफर्ड्कक्षे भविष्यति, तदा इंग्लण्ड्सीमातः बहिः वाणिज्यम् इति हेतोः *'सीमातः बहिः वाणिज्यम्'* इति 'रीतिः' भविष्यति ।

२. आक्स्फर्ड्पाठ्यक्रमम् इण्टरनेट्पत्राचारादि-दूरस्थशिक्षामाध्यमैः कश्चित् विश्वे यत्रकुत्रापि स्थित्वा सशुल्कं पठति चेत् तदा *'विदेशे उपयोगः'* इति ।

३. आक्स्फर्ड्विश्वविद्यालयः साक्षाद् भारते कुत्रापि स्वीयविद्यालयस्य प्रारम्भं करोति, आक्सफर्ड् पाठ्यक्रमः, परम् अत्रत्यजनानां द्वारा पाठनं, धनलाभः आक्सफर्ड्कृते इति चेत् तदा *'वाणिज्योपस्थितिः'* इति भवति ।

४. आक्स्फर्ड्विश्वविद्यालयः अत्र भारते शिक्षणापणस्य प्रारम्भं करोति, ब्रिटिशाः जनाः भारतम् आगत्य भारतीयेभ्यः ज्ञानदानं कृत्वा भारतीयान् अन्धकारनरकात् उद्धरिष्यन्ति, धनलाभः आक्सफर्ड्विश्वविद्यालयस्य भविष्यति, तदा *'जनानां गमनागमनम्'* इति भवति ।

बेङ्गलूरूनगरपरिसरे एतावता एव कतिचन 'इण्टर्नाँशनल्स्कूल्स्' आरब्धानि, परन्तु तानि उपरिनिर्दिष्टेषु चतुर्षु विभागेषु कुत्र अन्तर्भवन्तीति मया न विचारितम् । भारतीयानां श्वेतचर्ममोहस्य दौर्बल्यम् अस्माभिः सर्वैः विदितमेव । अतः २००५ तमवर्षस्य अनन्तरकाले इदानीन्तनः आंग्लमाध्यम-विद्यालयमोहः विदेशीयविद्यालयमोहः इति अपरम् अवतारं स्वीकृत्य आगच्छेत् । तत्र संस्कृतस्य स्थानं कुत्र भवेत् ?

निजीकरण-वैश्वीकरणयोः या समस्या अस्ति एषा अन्याभिः बह्वीभिः समस्याभिः सह सम्बद्धा अस्ति । तासां सर्वासां समस्यानां मूलमस्ति– धर्मे अनास्था, परम्परायाम् अनास्था, भारतीयतायाम् अश्रद्धा, संस्कृत्याः उपेक्षा, हिन्दूनाम् ऐक्यस्य अभावः, स्वाभिमानस्य ह्रासः विकृतिश्च, १५० वर्षाणाम् अश्रद्धोत्पादक-मेकालेशिक्षणव्यवस्था, अल्पसंख्याकवादः इत्यादयः । यावत्पर्यन्तं मेकाले-मार्क्स्-मैनारिटिवादाः सशक्ताः तिष्ठन्ति तावत्पर्यन्तं संस्कृतम् इदानीं यथा अस्ति तथैव उपेक्षापात्रं सत् ह्रासपथे अधः गच्छत्

भवेत् । हिन्दुत्वस्य जागरणं कारयतु, तदा सर्वाः समस्याः परिहृताः भविष्यन्ति । भोः संस्कृतानुरागिणः ! अस्माकं कल्याणं हिन्दुनवोत्थाने एव अस्ति । तस्मिन् हिन्दुसङ्घटनस्य स्थानीये कार्ये पूर्णतः निमज्जत । नेतृत्वं स्वीकुरुत । पुरतः स्थित्वा मार्गं दर्शयत - संस्कृतानुकूलदिशि !

GATS अन्तर्गतरूपेण केवलं वैदेशिकसंस्थाभिः भारतम् आगत्य शिक्षणवाणिज्यं करणीयम् इति नास्ति । भारतीयैः अन्यदेशान् गत्वा शिक्षणं शिक्षणवाणिज्यं वा कर्तुं शक्यते । भारतीयैः संस्कृतविश्वविद्यालयैः वास्तविकविश्वविद्यालयैः भवितुं शक्यते । विश्वे सर्वत्र संस्कृतस्य, संस्कृते निहितस्य ज्ञानस्य च पाठनं कर्तुं शक्यते । वाणिज्यं कर्तुं शक्यते । 'उपयोगं' कर्तुं शक्यते । GATSमध्ये अस्माकम् अपायः अवसरः चेति उभौ अपि स्तः । अपायः भारते अन्येषाम् आक्रमणस्य । अवसरः तावद् अन्यदेशेषु अस्माकम् आक्रमणस्य । बलं यस्य, फलं तस्य । प्रतिरोधाय, प्रथमाक्रमणाय च अस्माकं रणनीतिः का ? सज्जता का ?

आन्तरिकी भवतु, बाह्या वा भवतु, वर्तमाना परिस्थितिः अस्मान् किं वदति ? कन्नडभाषायां किञ्चित् आभाणकम् अस्ति, तस्य अर्थः एवं भवति - 'क्रियतां, नो चेत् म्रियताम्' इति । आंग्लभाषया अपि एतादृशमेव किञ्चित् अस्ति -'Perform or Perish' इति । अद्यतनस्थितौ वयं संस्कृतज्ञाः संस्कृताय, संस्कृतविकासाय, शास्त्रसंरक्षणाय च सेवामनोभावेन यदि अहोरात्रं कार्यं न कुर्मः तर्हि वयमेव विनष्टाः भवेम । कार्यं कृतं चेत् न पर्याप्तं, कार्यं साधनीयम् ! लक्ष्यं साधनीयममेव । साधयतु अथवा विनश्यतु !



[सम्भाषणसन्देशः - मार्च्, २००३]

# ३. सर्वेषां संस्कृतशिक्षणाय संस्कृतज्ञानां सज्जीकरणम्

कस्यचित् संस्थानस्य, सङ्घटनस्य कार्यस्य वा 'उद्देश्यकथनवाक्यं' (Mission Statement) किञ्चन भवति, भवितुम् अर्हति वा । तच्च उद्देश्यकथनवाक्यं स्पष्टं संक्षिप्तं च भवेत् । सामान्यतः संस्कृतभारत्याः कार्यशालासु 'संस्कृतसम्भाषणद्वारा भारतस्य वैभवसम्पादनम्' इत्येतत् संस्कृत-सम्भाषणान्दोलनस्य उद्देश्यकथनवाक्यम् इति व्याख्यानं क्रियते । तद् उचितमेव । प्रकृतं तु अग्रिमाणां द्वित्राणां वर्षाणां कार्याणां चित्रं मनसि कर्तुं, तत्र आद्यतां निश्चेतुं, किं करणीयम् इति स्पष्टतां प्राप्तुं च अस्य लेखस्य शीर्षकम् उद्देश्यकथनवाक्यत्वेन परिशीलयाम ।

**करणीयं कार्यद्वयम्**

भारतवासिनः सर्वे संस्कृतं जानीयुः इति अस्माकम् इच्छा । (सर्वे संस्कृतेन वदेयुः इति वाक्यम् अहं न प्रयुक्तवान् !) तां स्थितिम् आनेतुं कार्यद्वयं करणीयं भवति -

१. तेषु संस्कृतं पठनीयम् इति इच्छायाः, पठितुं शक्यते इति विश्वासस्य वा उत्पादनम् ।

२. तेषां सर्वेषां संस्कृतशिक्षणं च इति ।

एतत् कार्यद्वयं कैः करणीयं भवेत् ? स्फटिकम् इव सुस्पष्टं यत् संस्कृतज्ञैः एव; तन्नाम संस्कृतशिक्षकैः संस्कृतच्छात्रैः च एव; तत् करणीयं भवति इति । अतः सर्वेषां जनानां संस्कृतशिक्षणाय, तस्य महतः कार्यस्य साधनाय च संस्कृतज्ञाः सज्जीकर्तव्याः, प्रशिक्षणीयाः, प्रेरणीयाः, सङ्घटनीयाः, कार्ये योजनीयाश्च भवन्ति ।

गतेषु शताधिकवर्षेषु अस्माभिः जनेभ्यः यत् यादृशं वा संस्कृतं श्रावितं तस्य कारणतः, अपि च येन विधिना यया पद्धत्या यैः पाठ्यपुस्तकैश्च संस्कृतं पाठितं तस्य कारणतः च सर्वेषां जनानां मनसि 'संस्कृतं तु अयश्चणकतोऽपि अधिकं कठिनम्' इति कश्चन भयकारकः भावः दृढमूलः जातः अस्ति । वास्तविकतया अद्य सः भावः एव संस्कृतस्य प्रथमः शत्रुः । सः भावः एव संस्कृतस्य प्रबलतमं बाधकम् । तस्य मूलोत्पाटनं कथम् ?

**कुञ्चिका संस्कृताचार्याणां समीपे**

गते मईमासे आन्ध्रप्रदेशस्य राजमण्ड्रिनगरे संस्कृतभारत्याः प्रशिक्षण-शिबिरम् आयोजितम् आसीत् । तस्य उद्घाटनावसरे मम पत्रकारगोष्ठी काचित् आयोजिता आसीत् तत्रत्ये पत्रकारभवने । पत्रकारगोष्ठ्याम् उपपञ्चदश पत्रकाराः आसन् । प्रारम्भे एव अहम् आंग्लभाषया तान् निवेदितवान् यत् अहं प्रथमं निमेषद्वयं संस्कृतेन वदामि, अनन्तरम् आंग्लभाषया, तेलुगुभाषया च वदिष्यामि इति । तदा तेषु पञ्चषैः जनै उक्तं - ''न, वयं संस्कृतं न जानीमः'' इति । अहं पुनः अनुरुद्धवान् - ''कृपया निमेषद्वयं शृण्वन्तु । अनन्तरं प्रतिक्रियां प्रकटयन्तु'' इति । तथापि तेषु अन्यतमः सानुरोधम् उक्तवान् - ''मास्तु एव'' इति ।

तद् अशृण्वन् इव अहं तु तेलुगुभाषया प्रयुज्यमानैः एव संस्कृतशब्दैः, परं सरलसंस्कृतेन एव, निमेषद्वयम् उक्त्वा कथनं स्थगितवान्, प्रश्नार्थकभावेन तान् दृष्टवान् च ।

यः तावत् सानुरोधं 'मास्तु' इति उक्तवान् आसीत् तस्य मुखात् आगतम् - ''THIS Samskrit, I can understand'' इति !

अत्र संस्कृतशब्दस्य एतच्छब्दविशेषणम् अस्माभिः विशेषतया अवधातव्यम् । ''एतत् संस्कृतम्'' (तन्नाम एतादृशं संस्कृतम्) इति अनुभूतिः सर्वेषां भारतीयानां यदा भवति तदा संस्कृताय मार्गः उन्मुक्तः भवति । यावदधिकान् जनान् वयम् एतदनुभववतः कर्तुं शक्नुमः तावदधिकतया संस्कृतं कठिनमिति भावस्य परिमार्जनं भवति, संस्कृतानुकूलं वायुमण्डलं निर्मितं भवति च ।

सरलसंस्कृतम् (मम संस्कृतं सरलम् इति स्वयं संस्कृतज्ञः न वदेत्, प्रत्युत यत् श्रुत्वा सामान्यः श्रोता वदेत् - 'एतत् सरलम् अस्ति' इति, तादृशं सरलसंस्कृतम्) लक्षशः जनान्, अनधीतसंस्कृतैः अपि अवगमनयोग्यं संस्कृतं कोटिशः जनान् च श्रावयितुम् अस्माभिः कश्चन अभियानरूपः कार्यक्रमः चिन्तनीयः भवेत् । तादृशम् अभियानात्मकं देशव्यापिनं कार्यक्रमं चिन्तयितुं भारतव्याप्ताः लक्षाधिकाः सरलसंस्कृतभाषिकार्यकर्तारः अपेक्षिताः खलु ! भारते संस्कृतशिक्षकाः संस्कृतस्य स्नातक-स्नातकोत्तरच्छात्राः च आहत्य दशलक्षाधिकाः सन्ति । संस्कृतशिक्षकाः एतदर्थं सज्जाः भवन्ति चेत्, संस्कृताध्यापकाः क्षेत्रम् अवतरन्ति चेत् च संस्कृतच्छात्राः तान् अनुसरेयुः एव । अतः कुञ्चिका संस्कृताचार्याणां समीपे अस्ति !

## संस्कृतज्ञानाम् अभिलाषद्वयम्

सामान्यतः संस्कृतज्ञानां लेखनेषु, तैः मञ्चेषु क्रियमाणेषु भाषणेषु च तेषाम् अभिलाषद्वयम् अभिव्यक्तं भवति । तौ च अभिलाषौ -

१. संस्कृतं जनभाषा भवेत्

२. संस्कृतं भारतस्य 'राष्ट्र'भाषा भवेत् चेति ।

एतयोः अर्थः कः ? प्रथमस्य अर्थः भवति - जीवनस्य सर्वेषु क्षेत्रेषु; तन्नाम शैक्षिक-सामाजिक-प्राशासनिक-साहित्यक-मनोरञ्जनादिषु सर्वेषु क्षेत्रेषु; संस्कृतव्यवहारः भूरिप्रमाणेन भवेत्, आधिक्येन च भवेदिति । द्वितीयस्य अर्थः भवति - भारतस्य राजभाषारूपेण (सम्पर्कभाषारूपेण) संस्कृतं भवेत् इति ।

किञ्च संस्कृतज्ञैः एषा अपि अभियाचना (Demand) क्रियते यत् शिक्षणे संस्कृतम् 'अनिवार्यं' करणीयम् इति । किन्तु ते न अवगच्छन्ति यत् तथा अनिवार्यकरणस्य कालः इदानीं गतः अस्ति इति । अल्पमते विद्यमानः कोऽपि सर्वकारः महत् किञ्चित् परिवर्तनं कर्तुं न शक्नोति । देशे सर्वत्र आतङ्कवादः दिने दिने ताण्डवायते, तथापि तस्य निग्रहणाय अपेक्षितं 'पोटो'विधिं पारयितुं ते असमर्थाः ! एवं स्थिते संस्कृतस्य अनिवार्यत्वकल्पनस्य का वा कथा ?

किञ्च संस्कृतस्य राजभाषात्वेन घोषणस्य सम्पर्कभाषात्वेन स्वीकरणस्य वा ऐतिहासिकः अवसरः अतीतः । सः सुवर्णावसरः आसीत् देशस्य स्वतन्त्रतावसरे । तदा तु दृष्टिहीनेन नेतृत्वेन दूरदृष्ट्या न चिन्तितम् । तदा तु देशे सर्वत्र राष्ट्रभक्तेः वायुमण्डलस्य बलम् आसीत् । इदानीं तु अस्माकं लक्ष्यसिद्ध्यर्थं कार्यं द्विगुणिततया करणीयं भविष्यति । प्रबलराष्ट्रभक्तिभाव-प्रवाहनिर्माणम्, अन्यैः उपायैः संस्कृतस्य सम्पर्कमाध्यमत्वसम्पादनम् अथवा तादृशस्वीकार्यता-स्थितिनिर्माणम् इत्यादीनि करणीयानि भविष्यन्ति । तदस्तु तावत् । प्रकृतं तु वयं यद् अन्ते साध्यम् अस्ति, यच्च अनन्तरसाध्यमस्ति, तदुभयस्य अभिलाषम् अभियाचनां च आरम्भे एव कुर्वन्तः स्मः । तत् कथमिति विषयः तु अस्माकं लक्ष्यसिद्ध्यर्थं स्थितस्य मार्गमानचित्रस्य (Road Map) दर्शनेन स्पष्टः भवेत् ।

**सप्तपदात्मकः मार्गः**

सः मार्गः सप्तपदात्मकः । सप्तमम् अन्तिमं च पदं भवेत् राजभाषात्वं सम्पर्कभाषात्वं च । चतुर्थपदसाध्यं भवेत् शिक्षणे संस्कृतस्य अनिवार्यत्वम् । यदि लक्ष्यं प्राप्तव्यं तर्हि अयं सप्तपदात्मकः मार्गः एव प्रशस्ततमः । स च मार्गः अनुक्रमेण –

१. संस्कृतशिक्षणे संस्कृतम् ।

२. गृहेषु संस्कृतम् ।

३. सांस्कृतिक-धार्मिक-सामाजिकव्यवहारेषु संस्कृतम् ।

४. शिक्षायां संस्कृतम् ।

५. मनोरञ्जनक्षेत्रे संस्कृतम् ।

६. उद्योग-वाणिज्य-पत्रिकादिषु संस्कृतम् ।

७. प्रशासने संस्कृतम् ।

उपर्युक्तेषु सप्तसु पदेषु भागद्वयम् – आद्यानां त्रयाणाम् अनन्तरचतुर्णां चेति । आद्यत्रयम् अस्माभिः संस्कृतज्ञैः एव साधनीयं भविष्यति । तत्र सर्वकारस्य किमपि कर्तव्यं न भविष्यति । अनन्तरचतुर्षु सर्वकारस्य पूरकनीतयः कार्यवेगवर्धनाय लाभाय भवेयुः । किन्तु कार्यं तु अस्माभिः एव करणीयं

भविष्यति । आद्यानि त्रीणि साधयिष्यामः चेदेव अनन्तरचत्वारि साधयितुं शक्नुयाम ।

## प्रथमं चरणम्

इदानीं तु संस्कृतविरोधिनः वदन्तः सन्ति - ''भवन्तः संस्कृतज्ञाः संस्कृतशिक्षणे एव संस्कृतस्य प्रवेशं न कुर्वन्ति । भवन्तः एव संस्कृतं त्यक्तवन्तः । पाठनं परीक्षालेखनं वा संस्कृतेन न भवति । पुनः सर्वेषाम् अस्माकम् उपरि संस्कृतं किमर्थम् आरोपयन्ति ?'' इति । आदर्शस्य आचरणस्य आरम्भः अस्मत्तः एव खलु भवेत् ? समग्रे देशे संस्कृतस्य पाठने परीक्षायां च प्रादेशिकभाषाणाम् आंग्लभाषायाः वा स्थाने संस्कृतस्य आनयनाय एव १०-१५ वर्षाणि अपेक्षितानि स्युः । महतः एतस्य कार्यस्य प्रथम-सोपानरूपेण संस्कृतविद्यालय-महाविद्यालय-विश्वविद्यालयेषु पाठनस्य, परीक्षायाः, परस्परव्यवहारस्य च माध्यमत्वेन संस्कृतम् अनिवार्यतया आनेतव्यम् ।

## गृहेषु संस्कृतम्

संस्कृतविकासाय द्वितीयचरणरूपेण गृहेषु संस्कृतव्यवहारः आनेतव्यः । संस्कृतज्ञानां, संस्कृतच्छात्राणां संस्कृतानुरागिणां च गृहेषु संस्कृतव्यवहारस्य आरम्भः भवति चेत् अन्ये अपि बहवः अक्षरशः लक्षशः जनाः स्वबालानां संस्काराय स्वयं स्वगृहेषु संस्कृतव्यवहारस्य प्रारम्भं कुर्युः । महता प्रमाणेन, महत्या सङ्ख्यया गृहेषु संस्कृतव्यवहारस्य प्रारम्भः जातः चेत् संस्कृतस्य नवोदयः प्रारब्धः इति मन्तव्यम् ।

गृहेषु संस्कृतेन व्यवहारकारणतः लक्षशः जनानां मातृभाषातुल्या भविष्यति संस्कृतभाषा । तदा तादृशस्थितौ न केवलं धार्मिककार्येषु मन्त्राः प्रार्थना वा, अपि तु सर्वः वाग्व्यवहारः अपि संस्कृतेन कारयितुं शक्येत । तदनन्तरं कथाप्रवचनादयः अपि संस्कृतेन प्रारब्धाः भवेयुः । तस्मिन् काले सांस्कृतिक-कार्यक्रमान् कतिचन सामाजिकोत्सवान् च संस्कृतभाषया एव सम्पूर्णतया यथा भवेयुः तथा कारयितुं शक्येत । तदा संस्कृतस्य आधारः विस्तारितः भविष्यति । संस्कृतं कठिनं, निर्जीवम्, एकजातीयम् इत्यादयः भावनाः परि-मार्जिताः भविष्यन्ति । एवं च चतुर्थचरणं न्यसितुं बाधाः निवारिताः स्युः ।

## शिक्षायां संस्कृतम्

'शिक्षायां संस्कृतम्' इत्यत्र त्रयः अंशाः भवन्ति । शिक्षाक्रमे प्राथमिकस्तरतः आरभ्य उच्चमाध्यमिकस्तरपर्यन्तं स्नातकपर्यन्तं च यथा सर्वेऽपि संस्कृतभाषामपि अवश्यं पठेयुः तथा काचित् व्यवस्था, छात्राकर्षकवायुमण्डलं च इति प्रथमः अंशः । द्वितीयस्तु विज्ञान-गणित-इतिहास-समाजशास्त्रादयः विषयाः आंग्लभाषामाध्यमेन मातृभाषामाध्यमेन वा यथा पठ्यन्ते तथा सर्वेषां विषयाणां संस्कृतमाध्यमेन अध्ययनाय सर्वकारसम्मता व्यवस्था, छात्राकर्षकवायुमण्डलं च इति । तृतीयः अंशः तावत् BSc, BCom, BA, MSc, MCom, MA, LLB, MBBS, Engineering, Agricultural Science, MBA इत्यादिभिः विषयैः सह संस्कृतवाङ्मये तत्तद्विषये उपलभ्यमान-ग्रन्थानां कश्चन भागः तत्तद्विषयसङ्ग्रहः वा पाठ्यभागत्वेन योजनीयः इति ।

## मनोरञ्जनक्षेत्रे संस्कृतम्

उपर्युक्तप्रकारेण त्रिधा शिक्षायां संस्कृतस्य आगमनस्य १०-१५वर्षाणाम् अनन्तरं मनोरञ्जनक्षेत्रे अर्थात् दूरदर्शनेषु, चलच्चित्रेषु, सङ्गीतनाटकादिषु, कथादिसाहित्येषु च संस्कृतभाषया कार्यक्रमाणां प्रसारणं, प्रस्तुतिः, प्रकाशनं च सार्वत्रिकरूपेण भवेयुः । यतः तदा एव प्रेक्षकाः निर्मिताः भवेयुः । प्रेक्षकाः सन्ति इति प्रायोजकानां भावना भवेत् च । (प्रायोजकाः Commercial Value चिन्तयन्ति !)

तदा कोटिशः जनाः संस्कृतभाषिणः निर्मिताः भवेयुः । तेभ्यः वयं दृष्टिं दद्मः चेत् तेषु बहवः वाणिज्यव्यवहारेषु, उद्योगव्यवहारेषु, तत्र तत्र निजसंस्थासु च संस्कृतभाषां सम्पर्कमाध्यमभाषारूपेण प्रतिष्ठापयितुं शक्नुयुः । इतरभाषापत्रिकासु संस्कृतस्तम्भाः आरब्धाः भवेयुः । अथवा तावता व्यवसायिपत्रिकाः स्वयमेव संस्कृतावृत्ति(Samskrit Edition)प्रकाशनस्य प्रारम्भं कुर्युः ।

एतत्सर्वं यदा साधितं भवेत् तदा देशस्य सम्पर्कभाषारूपेण संस्कृतस्य सम्भावना, स्वीकारार्हता च नेतॄणां पुरतः भवेत्, प्रशासने संस्कृतम् इति विषयः चर्चार्थम् आगच्छेत् । एतावत् साधयितुं २०-३०वर्षाणि आवश्यकानि भवेयुः । एतस्मिन् एव कालावधौ भारताद् बहिः विद्यमानानां पञ्चकोटि-

भारतीयानां मध्ये संस्कृतप्रचारः भविष्यति चेत् विश्वे सर्वत्र यत् योग-आयुर्वेदवेदान्तादीनां महान् वातः वाति तेन वातेन सह, अर्थात् योग-आयुर्वेद-वेदान्तादिभिः सह, संस्कृतमपि 'विक्रेतुं' शक्ष्यामः चेत् तदा तद् भारताद् बहिः जायमानं कार्यद्वयं भारते संस्कृतस्य पुनःप्रतिष्ठापनकार्ये जनमानसपरिवर्तने च महत् आनुकूल्यं जनयेत् ।

किञ्च, अग्रिमे दशके दशकद्वये वा भारते स्वाभिमानजागरणस्य, राष्ट्रियभावैक्यवर्धनस्य, हिन्दुसङ्घटनकार्यस्य च वेगः यावदधिकः भविष्यति, तेषु कार्येषु संस्कृतज्ञानां सहभागः यावदधिकः भविष्यति, तावता प्रमाणेन संस्कृतस्य इष्टसिद्धिः अपि शीघ्रमेव सेत्स्यति ।

**दीर्घकालिकी कार्ययोजना**

एतत् सर्वं साधयितुम् अथवा न्यूनातिन्यूनं संस्कृतकार्यं कञ्चित् निर्णायकं घट्टं प्रापयितुं, राष्ट्रमानसं संस्कृतपरं कर्तुम् अस्माभिः संस्कृतज्ञैः सर्वैः सम्भूय एकयोजनानुसारं सुचिन्तितपूर्वयोजनापूर्वकं च दीर्घकालं यावत् महान् परिश्रमः करणीयः भवेत् ।

तच्च दीर्घकालीनं कार्यं घट्टत्रये भवेत् ।

ते च त्रयः घट्टाः - १. सङ्घटननिर्माणम्

२. उदाहरणोपस्थापनम्

३. संस्कृतमयकरणम् चेति ।

भारतस्य प्रथमस्वतन्त्रतासङ्ग्रामानन्तरं (१८५७) स्वतन्त्रताप्राप्तिपर्यन्तं (१९४७) नवतिवर्षाणां सङ्घर्षेतिहासः अस्ति । भारतेन स्वतन्त्रेण भवितव्यम्, तदर्थं जनैः सङ्घटितैः भवितव्यम् इति विचारस्य प्रचाराय, किञ्च समग्रं देशं जागरयितुं च महान् कालः अपेक्षितः अभवत् । पुनः राष्ट्रियस्तरे बहूनि आन्दोलनानि करणीयानि अभवन् - प्रत्यान्दोलनं मध्ये ५-८ वर्षाणाम् अन्तरं भवति स्म । सहस्रशः जनाः प्राणत्यागं कृतवन्तः, लक्षशः जनाः कारागृहाणि गतवन्तः, लक्षशः जनाः विद्याभ्यास-अर्थसम्पादन-उपजीविका-परिवारसुखादिकं स्वतन्त्रतायज्ञे आहुतिं कृतवन्तः । ब्रिटिश्जनाः गतवन्तः, परन्तु शताधिकवर्षेषु तैः निर्मितं यत् मेकालेमानसम् अस्ति तद् एव अद्य

भारतं प्रशास्ति । एतस्मात् मेकालेमानसाद् भारतस्य मोचनाय यः सङ्घर्षः करणीयः भवेत् सः सङ्घर्षः स्वतन्त्रतासङ्ग्रामादपि कठिनतरः भवेत् । मेकालेमानसात् मुक्ते भारते एव केवले संस्कृतस्य स्थानं भवेत् ।

राष्ट्रमानसपरिवर्तनं, कोटि-कोटि-जनानां संस्कृतशिक्षणं चेति एतद् कार्यद्वयं साधयितुं, किञ्च अपेक्षायां सत्यां संस्कृताय महन्ति राष्ट्रियजनान्दोलनानि सङ्घटयितुं च किञ्चित् संस्कृतप्रधानं जनसङ्घटनं निर्मातव्यम् । तस्मिन् सङ्घटने मुख्यभूमिका संस्कृतशिक्षकाणां, संस्कृतच्छात्राणां, संस्कृतानुरागिणां च एव भविष्यति । सङ्घटितशक्तिं विना महत् किमपि साधयितुं न शक्यते । अतः शक्तिनिर्माणं करणीयम् । ताश्च शक्तयः – जनशक्तिः, कार्यकर्तृशक्तिः संस्कृतज्ञानां सङ्घटितशक्तिः चेति ।

प्रायः अग्रिमाणि ८-१०वर्षाणि अस्माभिः सङ्घटननिर्माणाय एव, तदेकलक्ष्यं कृत्वा कार्यं करणीयं भवेत् । १९२५तमे वर्षे आरब्धः राष्ट्रिय-स्वयंसेवकसङ्घः ७५वर्षाणाम् अनन्तरम् अद्य देशे हिन्दुत्वस्य महाशक्तिरूपेण स्थितः अस्ति । भारतीयमजदूरसङ्घेन, विश्वहिन्दुपरिषदा, अखिल-भारतीय-विद्यार्थिपरिषदा च अद्य तत्तत्क्षेत्रे प्रथमक्रमाङ्कीयशक्तिरूपेण यदि स्थीयते तर्हि तत्र एकैकस्यापि सङ्घटनस्य पृष्ठतः स्थितं पञ्चाशदधिकवर्षाणां तपः एव कारणम् । अतः संस्कृतार्थं सङ्घटननिर्माणाय ८-१०वर्षाणि इति मया यत् उक्तं तत्र निर्दिष्टः कालः वस्तुतः अत्यल्पः एव । किञ्च एतावता कालेन प्रायः सप्तपदात्मककार्येषु प्रथमं पदम् अर्थात् 'संस्कृतशिक्षणे संस्कृतम्' इत्येतत् साधयितुमपि शक्नुयाम । निर्णायकप्रमाणेन/ महता प्रमाणेन संस्कृतशिक्षणे संस्कृतस्य आनयनाय यानि कार्याणि करणीयानि भवेयुः तेषु बहूनि सङ्घटननिर्माणकार्यस्य पूरकाणि अपि भवितुम् अर्हन्ति ।

केवलैः भाषणैः लेखनैः वा सङ्घटननिर्माणं न भवति । सङ्घटननिर्माणस्य उद्देश्यं भवति, विशिष्टा कार्यपद्धतिः भवति, कार्यक्रमाश्च भवन्ति । एतदर्थं संस्कृतभारत्या इदानीं विशेषतया, विनूतनतया च चिन्तनं क्रियमाणम् अस्ति ।

**उदाहरणोपस्थापनम्**

उदाहरणोपस्थापनं नाम जीवनस्य सर्वेषु क्षेत्रेषु शैक्षिकं, सामाजिकं,

धार्मिकम्, औद्योगिकं, साहित्यकम् इत्येवमादिषु क्षेत्रेषु संस्कृतं यद् आनेतव्यमस्ति तस्य प्रतिराज्यं बहूनि उदाहरणानि निर्मातव्यानि, येन संस्कृतस्य स्वीकारार्हता (acceptability) प्रतिष्ठापिता भविष्यति । संस्कृतगृहाणि, संस्कृतग्रामाः, संस्कृतमाध्यमविद्यालयाः, संस्कृतद्वारा सामाजिकसमरसता, संस्कृतद्वारा स्वाभिमानः, संस्कृतद्वारा विज्ञानप्रगतिः, संस्कृतद्वारा मानव-कल्याणं, संस्कृतद्वारा धर्मजागरणं, संस्कृतद्वारा आर्थिकविकासः, संस्कृतद्वारा राष्ट्रियभावैक्यवर्धनं, मनोरञ्जन-प्रशासन-वाणिज्यादिषु संस्कृतप्रयोगः इत्येवंप्रकारेण बहूनां विषयाणाम् उदाहरणानि उपस्थापयितुमपि ८-१०वर्षाणि आवश्यकानि भवेयुः । (एषः कालावधिः सङ्घटनकालावधेः अनन्तरम्) एतस्मिन् एव कालावधौ प्रायशः सप्तसु पदेषु द्वितीय-तृतीय-चतुर्थपदानि (गृहेषु संस्कृतम्, सांस्कृतिक-धार्मिक-सामाजिकादिव्यवहारेषु संस्कृतं, शिक्षायां संस्कृतम् चेति त्रीणि पदानि) अपि साधयितुं शक्येरन् ।

तृतीयघट्टः भवति संस्कृतमयकरणम् इति । एतस्मिन् एव घट्टे पञ्चम-षष्ठ-सप्तमपदानि अपि साधितानि भवेयुः । एषोऽपि कालावधिः ८-१० वर्षात्मकः स्यादेव । सः कालः २०२५तमवर्षसमीपवर्तिकालः स्यात् । सङ्घारम्भस्य शतवर्षाणि यदा समाप्तानि भविष्यन्ति तदा समग्रः देशः संस्कृतमयः यथा स्यात् तथा प्रयत्नाः स्युः ।

**सर्वाङ्गीणविकासः अपि...**

एतेन प्रकारेण आगामिषु २५-३० वर्षेषु वयं संस्कृतभाषायाः भाषारूपेण सर्वतोमुखविकासाय कार्ययोजनां यथा चिन्त्यते तथा एव संस्कृतस्य सर्वाङ्गीण-विकासः अपि चिन्तनीयः । शास्त्रपरम्परायाः उज्जीवनं, वेदपरम्परोज्जीवनं, नवसाहित्यनिर्माणं, पाण्डुलिपिमहाभाण्डारस्य प्रकाशनं, शोधकार्यं, सङ्गणकेषु संस्कृतम्, आंग्लादिभाषासु यथा वर्तमानकालिकविषयाः भवन्ति तथा संस्कृते अपि यथा स्यात् तथा करणम् - इत्येवं सप्तसु क्षेत्रेषु अपि २५-३० वर्षाणां कार्यस्य आवश्यकता भवेत् । एताः योजनाः युगपत् क्रियान्विताः भवेयुः ।

एवं २५-३० वर्षाणि यावत् संस्कृतज्ञाः, विशेषतया संस्कृतशिक्षकाः अन्यत् सर्वं विस्मृत्य सङ्घटनेन सह संयुक्ताः सन्तः समर्पणभावेन अहोरात्रं

कार्यं कर्तुं यदि सज्जाः भवेयुः, तर्हि संस्कृतोन्नतिः निश्चप्रचा । अतः एतेषु कार्येषु सर्वेषां संस्कृतज्ञानां योजनमेव सद्यःकालीनम् अस्माकं कार्यम् ।

**रुच्युत्साहादयः गुरुसम्बद्धाः अपि**

यदा वयं संस्कृतमाध्यमेन संस्कृतपाठनविषये वदामः, संस्कृतेन सम्भाषण-विषये वदामः, तदा आचार्याः प्राध्यापकाः च वदन्ति - 'छात्राणां रुचिः नास्ति', 'विद्यमानाः पलायनं कुर्युः' इत्यादि । यदा अहं तत्र तत्र एतस्मिन् एव विषये छात्रैः सह वार्तालापं करोमि तदा एकैकोऽपि छात्रः साक्रोशं वदति - 'अस्माकम् आचार्यः / प्राध्यापकः संस्कृतेन न पाठयति, अतः अस्माकम् एषा दुर्दशा' इति । देहल्यां संस्कृतभारत्या संवादशाला प्रचाल्यते । १४ दिनानि प्रशिक्षणम् । भोजनम्, आवासः, प्रशिक्षणम् इत्यादयः सर्वे अस्माभिः दीयन्ते । केवलं २५०/-रूप्यकाणां पञ्जीकरणशुल्कमात्रं गृह्यते शिक्षार्थितः । प्रतिपक्षं न्यूनातिन्यूनं ३० जनानां गणः तत्र भागं गृह्णाति । यद्यपि संस्कृतशिक्षकाः तत्र प्रशिक्षणप्राप्त्यर्थं न आगच्छन्ति, तथापि बि.ए., एम्. ए., पि. एच्. डि.- आचार्यादिच्छात्राः अधिकतया भवन्ति, पुरुषाः महिलाश्च । तत्र आगतेषु सर्वः अपि प्रथमदिने संस्कृतेन मुखम् उद्घाटयितुम् अपि कष्टम् अनुभवति । सः एव चतुर्दशे दिने सरलतया संस्कृतेन शिविरानुभवं वदन् - "अहम् अत्र सप्ताहद्वये संस्कृतेन भाषणक्षमतां प्राप्तवान्, विश्वासं प्राप्तवान्, जीवनदृष्टिं प्रेरणां च प्राप्तवान् । यदि अत्र यथा अस्ति तथा मम संस्कृतविद्यालयेऽपि, संस्कृतविभागेऽपि पाठनम् अभविष्यत् तर्हि अहम् अद्य अन्यः एव अभविष्यम्" इति भावगद्गदकण्ठः भवति । अद्यपर्यन्तं संवादशालायां ५० शिबिराणि अभवन् । तेषु २०००अधिकाः भागं गृहीतवन्तः । ते च सर्वेभ्यः राज्येभ्यः आगताः आसन् । तेषां सर्वेषामपि अयं समानः अनुभवः । अतः मम भाति– 'रुचिः', 'उत्साहः' इत्ययं विषयः गुरुसम्बद्धः अपि विषयः, न तु केवलं छात्रसम्बद्धः !

बुभुक्षा अस्ति चेदेव भोक्तुः मुखे रुचिः भवति इति यावद् सत्यं तावदेव सत्यं पाचकेन पाकः अपि रुचिपूर्णः करणीयः इति । किञ्च उत्साहः प्रेरणा च उपदेशेन न वर्धते, अपि तु स्वजीवने आचरणेन । यदा संस्कृतस्य शिक्षकः

आचार्यः प्राध्यापकः वा स्वयं संस्कृतेन भाषणाय उत्सहते, तदा छात्राः अपि संस्कृतसम्भाषणे उत्सहन्ते ।

**एतादृशाः सन्ति संस्कृतज्ञाः**

यदि आचार्यः सेवाभावनया नागरिकान् संस्कृतं पाठयति, संस्कृत-प्रचारकार्यक्रमान् आयोजयति, प्रतिदिनं यत्किञ्चित् संस्कृतकार्यं समाजे करोति, तदर्थं प्रतिदिनं समयं ददाति, तर्हि तेन आचार्येण सह छात्राः अपि स्वयं प्रेरिताः सन्तः धनस्य अपेक्षाम् अकृत्वा कार्याय आगच्छन्ति । यदि संस्कृताध्यापकः Tution, कर्मकाण्डम्, जन्मकुण्डलीवीक्षणम् - इत्येतावन्मात्रं करोति तर्हि तस्य शिष्याणां जीवनादर्शः तावन्मात्रमेव भवति, ज्ञानसम्पादनमपि द्वितीयं भवति, 'अर्थं वागनुधावति !' (क्व वाचमर्थोऽनुधावति !)

सभायाः आयोजनं कृतं चेत् तत्र मुख्यवक्तृरूपेण भाषणं कर्तुं सर्वः अपि संस्कृतज्ञः सज्जः भवति । हां, केषुचित् नगरेषु TA दातव्यं भवति ! (श्रोतृत्वेन गतवद्भिः अपि TA लभ्यते, अद्यत्वे तदभावे गमनोत्साहः न्यूनः इति आश्चर्यं मास्तु ।) 'परं भाषणाय न, अपि तु तत्र कटप्रसारणाय' इत्युक्ते ते एव संस्कृतज्ञाः वदन्ति - 'तत्तु भृत्यस्य कार्यं, मादृशस्य तत्र का आवश्यकता ?' इति । एतादृशाः सन्ति संस्कृतज्ञाः !!

संस्कृतमाता अद्य स्वपुत्रेभ्यः काम् अपेक्षां करोति ? सा अपेक्षां करोति यत् संस्कृतज्ञः सर्वः अपि स्थाने स्थाने संस्कृतकक्ष्याः आयोजयेत्, निश्शुल्कं पाठयेत्, कार्यक्रमान् आयोजयेत्, जनसम्पर्कं कुर्यात्, अधिकारिणां महतां च मेलनं कुर्यात्, संस्कृतकार्याय धनसङ्ग्रहं कुर्यात्, पवित्रकार्याय धनयाचनां कर्तुं सङ्कोचं न अनुभवेत्, संस्कृताय प्रतिदिनम् अटेत्, जनान् योजयेत्, कार्यकर्तृगणनिर्माणं कुर्यात्, प्रेरणास्रोतः स्यात्, क्रियाशीलतायाः उदाहरणं स्यात्, चैतन्यस्य मूर्तिः स्यात्, प्रवहद्विद्युत्तन्त्री भवेत् !.... इति ।

**संस्कृतच्छात्रेषु ध्येयवादः**

संस्कृतक्षेत्रे ये युवानः सन्ति - युवशिक्षकाः छात्राः च - तेषां विषये अस्माभिः विशेषतया अवधातव्यम् । तत्रापि संस्कृतस्य बि.ए.-एम्.ए.-शास्त्रिआचार्यच्छात्राः अधीयानाः अधीतवन्तः वा । एतेषु 'संस्कृताय जीवनं

दातव्यम्, संस्कृतप्रधानं जीवनं करणीयम्, संस्कृतसेवा एव जीवनस्य परमोच्चः आदर्शः, संस्कृताय जीवनमेव जीवनम्, चणकान् खादित्वा वा प्राणान् रक्षेयं, परं संस्कृतकार्यं विना न जीवेयम्, लक्षशः जनान् संस्कृतं पाठयेयम्, शास्त्रेषु तलस्पर्शिज्ञानं सम्पादयेयम्, महाभाष्यस्य अशीतिमपि आह्निकानि पठेयम्, शास्त्रपरम्परायाः अखण्डज्योतिषः संरक्षणाय मम जीवनतैलधारां दद्याम्, संस्कृतस्य समृद्धये स्वयं दारिद्र्यस्य आलिङ्गनं कुर्याम्, संस्कृतस्य भविष्यं मम हस्ते अस्ति – मम भविष्यं संस्कृतस्य हस्ते भवतु नाम, तारुण्यस्य शक्तिं संस्कृताय व्ययीकरोमि' इत्येवंप्रकारेण प्रखरध्येयवादं संस्कृतच्छात्रेषु उत्पादयेम तर्हि संस्कृतजगति महान् विद्युत्सञ्चारः भवेत् ।

संस्कृतच्छात्राणां नेत्रेषु संस्कृतस्य भव्यभविष्यतः स्वप्नाः यथा स्युः तथा दृष्टिः दातव्या । संस्कृतप्रचाराय, तन्नाम संस्कृतसम्भाषणशिबिरचालनाय ग्रामं ग्रामं गन्तुं प्रेरणा दातव्या । शिक्षणानन्तरं वर्षं वर्षद्वयं वा विना वेतनं संस्कृतप्रचारकार्यं कर्तुं धैर्यं पूरणीयम् । एकैकस्य अपि संस्कृतच्छात्रस्य मनसि व्यक्तिसुखविषये अल्पाकांक्षा, संस्कृतविकासाय महत्कार्यकरणस्य महत्त्वाकांक्षा च यथा स्यात् तथा जीवनमहत्त्वाकांक्षा उत्पादनीया । तदा सः युवसमूहः असाध्यमपि साध्यं कुर्यात् ।

**छात्राणां सज्जीकरणम्**

यदि संस्कृतच्छात्रेषु उत्साहनिर्माणं करणीयम्, आत्मविश्वासः उत्पादनीयः, संस्कृतोन्मुखता, अध्ययनोन्मुखता, शास्त्रोन्मुखता च आनेतव्या तर्हि तदर्थम् अत्युत्तमः उपायः नाम तेभ्यः मासं यावत् सम्भाषणप्रशिक्षणं दत्त्वा, पश्चात् १५दिनानां सम्भाषणशिबिरसञ्चालनप्रशिक्षणं दत्त्वा अनन्तरं तेषु एकैकस्य द्वारा द्वित्राणां सम्भाषणशिबिराणां सञ्चालनम् । तावत् क्रियते चेत् तस्य छात्रस्य व्यक्तित्वे एव महत् परिवर्तनं भविष्यति । एकवारं कस्यचित् संस्कृतविद्यालयस्य सर्वेषां छात्राणां कृते एतादृशं संस्कारं दत्त्वा यदि प्रयोगं कुर्याम तर्हि निश्चयेन तस्य विद्यालयस्य इतिहासे नवस्य अध्यायस्य आरम्भः भवेत् !

संस्कृतच्छात्राणां द्वारा सामूहिकरूपेण सेवाकार्यक्रमाः (संस्कृतसेवा

समाजसेवा वा) कारणीयाः । संस्कृताध्यापकैः छात्रैः च मिलित्वा एतादृशकार्यकरणेन संस्कृतज्ञेषु सामूहिकसक्रियता आगमिष्यति, यस्याः च इदानीं महती आवश्यकता अस्ति संस्कृतप्रचाराय । छात्रशक्तेः सामान्येन उपयोगेन एव अनायासेन एव प्रतिराज्यं सहस्रशः सम्भाषणशिबिराणि युगपत् कारयितुं शक्नुयाम, येन समाजः आन्दोलितः भवेत् । लक्षाधिकाः संस्कृतच्छात्राः सन्ति । यदि संस्कृताचार्याः मनः कुर्वन्ति तर्हि संस्कृतभारत्याः साहाय्येन एते संस्कृताचार्याः स्वच्छात्राणां द्वारा लक्षाधिकसम्भाषणशिबिराणि कारयितुं शक्नुवन्ति, येन झञ्झावातरूपेण संस्कृतसन्देशः प्रसरेत् । कस्यापि संस्कृतविद्यालयस्य प्रधानाचार्यः कस्यापि संस्कृतविभागस्य विभागाध्यक्षः वा स्वमहाविद्यालयस्य/विभागस्य सर्वेषां च्छात्राणां द्वारा तस्मिन् नगरे सम्भाषणशिबिराणि युगपत् कारयितुम् इच्छति तर्हि तेभ्यः सर्वेभ्यः च्छात्रेभ्यः प्रशिक्षणदानस्य उत्तरदायित्वं संस्कृतभारती निर्वक्ष्यति । एतादृशकार्यक्रमाणां द्वारा तस्मिन् नगरे तस्य विद्यालयस्य अस्तित्वं सर्वैः ज्ञातं भविष्यति । गच्छता कालेन छात्रसङ्ख्या अपि वर्धेत । एकैकोऽपि संस्कृतविद्यालयः संस्कृत-विभागश्च संस्कृतस्य नवोत्थानस्य प्रेरणाकेन्द्रं भवेत् । तस्मात् न प्रमाणपत्र-धारिणः निर्गच्छेयुः, अपि तु संस्कृतदास्यबन्धविमोचयितारः, संस्कृतोत्कर्ष-साधकाः, संस्कृतसेवकाः, संस्कृतार्थं योद्धारः, कृतसंस्कृतप्रचारसङ्कल्पाः, स्वीकृत-संस्कृतसम्भाषणदीक्षाः, वीरव्रतिनः निर्गच्छेयुः ।

**छात्रेषु प्रेरणाम् उत्पादयितुम्....**

यदि संस्कृतच्छात्रेषु उत्साहः, सक्रियता, प्रेरणा इत्यादयः गुणाः अपेक्षिताः तर्हि तदनुगुणं कार्यक्रमाः चिन्तनीयाः । यथा - संस्कृतस्य प्रेरणाकेन्द्राणि प्रति प्रवासः, (कर्णाटकस्य हरिहरपुरम् इत्यत्र विद्यमानं प्रबोधिनीगुरुकुलं पश्यन्तु । लघुबालानामपि संस्कृतसम्भाषणं श्रुत्वा सर्वे मूकविस्मिताः भवन्ति ।) वयोवृद्धेन महता शास्त्रपण्डितेन सह वासः, संस्कृतार्थं 'जीवनं' जीवितवतां प्रेरणाप्रसङ्गानां श्रावणम् इत्यादि ।

यथा वा - अतीतशताब्द्याः आदिभागे तमिलुनाडुराज्ये अप्पय्यदीक्षित-कुलोत्पन्नः राजुशास्त्रिनामकः कश्चन विख्यातः प्राचीनन्यायविद्वान् आसीत् ।

सः सप्ततिवर्षदेशीयः आसीत् । तस्मिन् एव समये मैसूरुतः कश्चन युवा रामशास्त्रिनामकः नवद्वीपं गत्वा (वङ्गप्रदेशस्य नवद्वीपक्षेत्रं नव्यन्यायाय विख्यातम् आसीत् ।) नव्यन्यायं पठित्वा आगत्य मैसूरुमहाराजस्य आस्थान-विद्वान् जातः आसीत् । तस्य रामशास्त्रिणः ख्यातिः राजुशास्त्रिणा श्रुता एव । राजुशास्त्रिणः अन्तरङ्गे नवीनन्यायस्य अध्ययनस्य इच्छा आ बहोः कालात् आसीत् । अतः सः मैसूरुनगरं गतवान् । यावत् राजुशास्त्री तत्र प्राप्तवान् तावता रामशास्त्री तीर्थयात्रार्थं रामेश्वरं प्रति प्रस्थितः आसीत् । महाराजस्य आस्थानविद्वान् इति कारणतः सः शिबिकायाम् उपविश्य यात्रां करोति स्म । राजुशास्त्री अपि शिबिकाम् अनुसृत्य चलति स्म । कश्चन राजुशास्त्रिणं पृच्छति – 'सप्ततिवर्षदेशीयः वृद्धः भवान् यूनः तस्य अनुसरणं किमर्थं करोति ?' इति । किमपि अनुक्त्वा राजुशास्त्री अनुगच्छन् भवति । दिनद्वयानन्तरं यदा रामशास्त्री अकस्मात् राजुशास्त्रिणं पश्यति । 'को भवान् ?' इति पृच्छति । तदा राजुशास्त्री – 'अहम् अमुकः, नव्यन्यायं पिपठिषुः भवत्समीपम् आगतवान् । मां शिष्यत्वेन स्वीकरोतु' इति उक्तवान् । राजुशास्त्रिणः ख्यातिं रामशास्त्री अपि जानाति स्म । अतः अनुक्षणमेव रामशास्त्री शिबिकातः अवतीर्य राजुशास्त्रिणः अभिवादनं कृतवान् । पश्चात् रामेश्वरपर्यन्तं यात्रायामेव क्वचित् उभौ अपि शिबिकायाम् उपविशन्तौ, क्वचित् पादाभ्यां गच्छन्तौ च न्यायाध्ययनं कृतवन्तौ । एवम् आसीत् शतात् वर्षेभ्यः पूर्वं ज्ञानपिपासा, अध्ययनपरिश्रमः, गुरुशिष्यसम्बन्धश्च ! किं वयं तां पण्डितपरम्पराम् अक्षुण्णां रक्षितुं प्रयतामहे ?

सद्यः अहं चेन्नैनगरं गतवान् आसम् । तत्र मया दृष्टं प्रेरणाप्रसङ्गद्वयं भवतः अपि निवेदयितुम् इच्छामि । न.रा.कुमारः नाम अस्माकं कार्यकर्ता प्रबन्धविज्ञानतज्ञः । तस्य पुत्री रुक्मिणी अमेरिकायां विज्ञानच्छात्रा । सा पूर्वं सम्भाषणशिबिरं गतवती आसीत् । इदानीं तस्याः विवाहः । पतिः सङ्गणक-तज्ञः अमेरिकायाम् । सा विवाहमण्डपे एव पतिं किञ्चित् संस्कृतं पाठयित्वा पत्युः द्वारा कतिचन संस्कृतवाक्यानि वाचितवती अपि । 'वाक्यद्वयेन किम् ?' इति कोऽपि संस्कृतज्ञः कदाचित् पृच्छेत् । अत्र वाक्यद्वयमात्रत्वं मा पश्यतु ।

तं प्रयत्नं पश्यतु, तां संस्कृतश्रद्धां पश्यतु, तत्र तस्याः आनन्दं, संस्कृतप्रेम च पश्यतु । किं प्रत्येकं संस्कृतशिक्षकः, प्रत्येकं संस्कृतच्छात्रः च ईदृशीं दृष्टिं प्राप्नुयात् ?

तत्रैव चेन्नैनगरे पद्मनाभ अय्यरः नाम अशीत्यधिकवर्षीयः वृद्धः । केन्द्रीयखनिजमन्त्रालये अधिकारिरूपेण कार्यं कृत्वा निवृत्तेः अनन्तरं सस्कृत-सेवा करणीया इत्येकेन एव कारणेन हैदराबादे निवसतां गृहजनानाम् इच्छायाः विरुद्धम् अनुजेन सुब्रह्मण्य-अय्यरेण सह चेन्नैनगरे तिष्ठति । सः आदौ ४-५ वर्षाणि स्वयं संस्कृतं पठितवान् । (यतः सः पूर्वं संस्कृतं न जानाति स्म प्रायः ।) पश्चात् इदानीं पञ्चदशवर्षेभ्यः निरन्तरं जनान् संस्कृतं पाठयति । शिबिराणि आयोजयति, पत्राचारशिक्षणयोजनायाः छात्रेभ्यः सर्वविधसाहाय्यं करेति, प्रतिदिनं शतस्य दूरभाषीयप्रश्नानाम् उत्तराणि वदति, उपत्रिंशानि पत्राणि लिखति । एषा सेवा एकं दिनम् अपि अविहाय प्रचलति पञ्चदशभ्यः वर्षेभ्यः, इदानीमपि अनुवर्तते । वार्धक्याद् तस्य हस्तौ कम्पेते, पादौ न चलतः, दृष्टिः मन्दा जाता अस्ति, परं कार्यम् ईषद् अपि न कुण्ठितम् । भाषमाणः सः उक्तवान् - ''पूर्वम्, इदानीमपि मम एका एव इच्छा - यावदधिकं शक्यं तावत् संस्कृतसेवा करणीया इति । अतः एतस्मिन् शरीरे यावत् प्राणाः भवन्ति तावत् अहं संस्कृतसेवां करोम्येव । अत्र एतस्मिन् प्रकोष्ठे संस्कृतपाठं कुर्वतः एव, संस्कृतच्छात्रेभ्यः पत्राणि लिखतः एव, संस्कृतकार्यं कुर्वतः एव वा मम प्राणाः निर्गच्छेयुः इति मम अपेक्षा'' इति ।

तत्र मया सह स्थितवतः संस्कृतभारत्याः तमिलुनाडुराज्यसङ्घटनमन्त्रिणः श्रीमतः पद्मकुमारस्य नेत्रे अश्रुपूर्णे आस्ताम् !



[सम्भाषणसन्देशः - जनवरी, २००२]

# ४. कालः परिस्रवति हस्तात् !

पूर्वं 'शलाकापरीक्षा' इति काचित् परीक्षापद्धतिः संस्कृतक्षेत्रे आसीत् । परीक्षां स्वीकर्तुकामः छात्रः कश्चन परीक्षकस्य पुरतः स्वेन अधीतस्य ग्रन्थस्य नाम वदति । परीक्षकः तस्मिन् ग्रन्थे शलाकां (काष्ठस्य रजतस्य वा सूचीं) यत्र योजयति तत् पृष्ठम् उद्घाट्य तत्रत्यं विषयम् अधिकृत्य विभिन्नान् प्रश्नान् पृच्छति । छात्रः सर्वेषाम् अपि समाधानं वदति । एवं परीक्षाकरणमेव शलाकापरीक्षा नाम । सामान्यतः दशवारं शलाकास्थापनं भवति स्म । तत्र त्रिवारं वाचिकपरीक्षा, अर्थात् उद्घाटिते पृष्ठे प्रथमं या पङ्क्तिः भवति ततः आरभ्य उत्तरोत्तरपङ्क्तयः परीक्षार्थिना ग्रन्थदर्शनेन विना स्मरणबलेन वक्तव्याः, यावत् परीक्षकः स्थगयति तावत् । अनन्तरं त्रिवारं यत्र शलाकया निर्दिश्यते ततः आरभ्य परीक्षार्थिना पङ्क्तीनाम् अर्थविवरणं स्ववाक्यैः करणीयम् । तदनन्तरं त्रिवारं चतुर्वारं वा शलाकानिर्दिष्टपङ्क्तीनां सम्बन्धे परीक्षकस्य प्रश्नाः परीक्षार्थिना समाधातव्याः । तन्नाम शलाका-परीक्षास्वीकरणाय समग्रः ग्रन्थः छात्रस्य स्मृतौ स्यात्, सम्पूर्णं व्याख्यातुम् अपि सः शक्नुयात् च । पूर्वं तावत् एकैकः अपि छात्रः बहुषु शास्त्रग्रन्थेषु शलाकापरीक्षार्थं सज्जः भवति स्म ! अद्यत्वे सा परम्परा लुप्ता । परं राष्ट्रियसंस्कृत-संस्थानेन तस्याः परम्परायाः उज्जीवनाय, प्रतिवर्षम् आयोज्यमानायाः अखिलभारतस्तरीय-भाषणादि-प्रतियोगितायाः कार्यक्रमावसरे शलाकापरीक्षा एषु दिनेषु आरब्धा अस्ति । (तदर्थं वर्षपूर्वमेव ग्रन्थस्य उद्घोषणं क्रियते संस्थानेन ।)

परम् अद्यतनी परिस्थितिः परिशील्यताम् । कस्याश्चित् संस्कृतपाठशालायां परीक्षासु छात्राः पुस्तकं दृष्ट्वा उत्तरं लिखन्ति इति अहं श्रुतवान् । पुनः कदाचित् तत्रत्येन आचार्येण सह वार्तालापावसरे मया तद्विषये पृष्टम् । तदा सः उक्तवान् - ''भवान् कुत्र अस्ति ? परीक्षाप्रकोष्ठे वयं पुस्तकम् उद्घाट्य

प्रश्नस्य उत्तरं कुत्र अस्ति इति दर्शयित्वा लेखितुं वदामः चेदपि ते लेखितुं न शक्नुवन्ति, अत्र किं वक्तव्यम् ?'' इति !

किं केचन युवानः 'अहं शलाकापरीक्षार्थं सज्जतां करिष्यामि' इति ध्येयवन्तः भूत्वा अध्ययनपरम्पराम् उज्जीवयितुं, ज्ञानस्तरं वर्धयितुं च कृत-सङ्कल्पाः भवेयुः ?

**लुप्तप्राया परम्परा**

संस्कृतभारत्याः कर्णाटकशाखया अमरकोषस्य प्रथमकाण्डस्य ध्वनिमुद्रिका सद्यः प्रकाशिता अस्ति । अमरकोषकण्ठपाठपरम्परा अपि इदानीं लुप्तप्राया । पूर्वं सर्वः अपि बाल्ये अमरकोषं कण्ठस्थं करोति स्म । बाल्ये कण्ठस्थी-करणमपि विनायासम् अल्पप्रयासेन एव सिध्यति । कोषः, तत्रापि नामलिङ्गानु-शासनम् – अमरकोषः कण्ठस्थः यदि भवति तर्हि न केवलं काव्यपठनसमये पदानाम् अर्थावगमने सरलता, अपि तु वाक्यप्रयोगावसरे शब्दानां लिङ्गनिर्णये अत्यन्तं सौकर्यं भवति । पारम्परिकपद्धत्या काव्यानाम् अध्ययनावसरे अष्टपदीयशिक्षणे प्रतिशब्दं कोषः वक्तव्यः भवति छात्रेण । अतः एव पञ्चमहाकाव्यानां मल्लिनाथीयव्याख्याने विपुलतया कोषोल्लेखः कृतः । अद्यापि केचन ज्येष्ठाः विद्वांसः एतादृशाः सन्ति ये कस्मिन्नपि जिज्ञासासन्दर्भे झटित्येव मुखेन (पुस्तकदर्शनेन विना) कोषोल्लेखं कृत्वा सुखेन जिज्ञासासमाधानं कुर्वन्ति । तैः विद्यार्जनकाले अमरकोषः कण्ठस्थीकृतः इति हेतोः अद्य संस्कृतभाषा तेषां स्वाधीना वर्तते । पुनः पुनः ध्वनिमुद्रिकाश्रवणं कण्ठस्थीकरणे उपकारं कुर्यात् ।

शलाकापरीक्षा भवतु, कोषपरम्परा वा भवतु, प्रश्नः अयमस्ति यद् अद्य एतादृशगुणात्मक प्रयासाय संस्कृतच्छात्रान् शिक्षकान् च कथं प्रेरयेम इति । अत्र चिन्तनार्थं त्रयः बिन्दवः –

१. कैश्चिद् बुद्धिमद्भिः छात्रैः सह वैयक्तिकरूपेण, स्नेहेन च वार्तालापकरणम्, एतदर्थं प्रेरणादानं, शिक्षणं, प्रोत्साहनं च लाभाय भवेत् । एतेषां द्वारा वयं यदि कतिचन उदाहरणानि निर्मास्यामः तर्हि पश्चात् इतरान् प्रेरयितुं शक्नुयाम ।

२. संस्कृतक्षेत्रस्य प्रमुखाः एतं विषयं वार्तालापविषयं कुर्युः, छात्रान् एतत्सम्बन्धे अनौपचारिकप्रश्नान् कुर्युः ।

३. कस्यापि ग्रन्थस्य ग्रन्थभागस्य वा शलाकापरीक्षास्वीकरणम् इत्येतद् प्रतिष्ठाविषयः करणीयः छात्राणां मध्ये । (तत्र सफलतां प्राप्तवद्भ्यः सम्माननकार्यक्रमाः, पुरस्कारदानं वा करणीयम् ।) हिब्रूभाषायाः पुनरुज्जीवने एतादृशः एव प्रसङ्गः अस्ति । अमरकोषस्य काण्डत्रये प्रतिकाण्डं कण्ठस्थीकृतवते अयं पुरस्कारः इति घोषणा करणीया ।

**अनुकरणीयः प्रयोगः**

संस्कृतच्छात्रेषु उत्साहस्य गतिशीलतायाः गुणवत्तायाश्च वर्धनाय शीघ्र-फलदायी कश्चन कार्यक्रमः अस्ति । कर्णाटकस्थे 'उडुपि'नगरे श्रीमन्मध्व-सिद्धान्तप्रबोधिनीसंस्कृतमहापाठशाला अस्ति, यत्र सार्धैकशतं छात्राः पठन्ति । तत्र कश्चन उत्तमः प्रयोगः कृतः । महापाठशालायाः उपपञ्चाशानां छात्राणां संस्कृतसम्भाषणप्रशिक्षणं कृतम् । तत्पश्चात् सम्भाषणशिबिरचालनाय तेषां कृते दशदिनात्मकं शिक्षकप्रशिक्षणमपि कृतम् । तदनन्तरं तेषां द्वारा महा-पाठशालां परितः जिल्लाक्षेत्रे एतावता एकनवतिस्थानेषु सम्भाषणशिबिराणि आयोजितानि । तेषां समापनोत्सवाः अपि वैभवेन सञ्चालिताः । एतेन उपक्रमेण संस्कृतच्छात्रेषु महान् परिणामः दृष्टः ।

यद्यपि भारते उपपञ्चसहस्राः संस्कृतपाठशालाः सन्ति, तथापि तासु पञ्चशतं महापाठशालाः उत्तमाः इति वक्तुं शक्यते । किञ्च तादृशाः अपि उपपञ्चाषाः महाविद्यालयाः सन्ति, येषु संस्कृतविषयम् अधिकृत्य बि.ए, एम्.ए, पाठनं भवति । यदि एते एकसहस्रं महापाठशालाः महाविद्यालयाश्च उडुपिमहापाठशालायाः अनुसरणं कुर्युः, तर्हि लक्षाधिकानि सम्भाषण-शिबिराणि सञ्चालितानि भवेयुः । किञ्च ये ये शिबिरशिक्षकाः भवन्ति, ते सर्वे संस्कृतेन भाषणसमर्थाः सन्तः जीवने ध्येयवादिनः, कृतिशीलाः, अध्ययनशीलाश्च भवन्ति ।

भारते प्रत्येकस्मिन् राज्ये प्राचीनाः पाण्डुलिपिग्रन्थाः सन्ति । केषाञ्चित् गृहेषु अपि एतादृशाः सङ्ग्रहाः सन्ति । संस्कृतविद्यालयच्छात्राः, संस्कृत-

विभागच्छात्राः, माध्यमिकविद्यालयसंस्कृतच्छात्राः, सम्भाषणशिबिरच्छात्राः वा ये सन्ति तेषां प्रवासकार्यक्रमाः एतादृशग्रन्थसङ्ग्रहस्थानं प्रति आयोजनीयाः । तान् ग्रन्थान् प्रदर्श्य भारतीयज्ञानपरम्परायाः महत्त्वं वर्तमानस्थितिं च यदि तेषां पुरतः वर्णयेम तर्हि कस्यापि हृदये अग्निः प्रज्वलेदेव । यतः ताडग्रन्थाः भावजागरणे अत्यन्तं प्रभावि उपकरणम् ।

**शिक्षणीयः पाठः**

वयं भारतरत्नबिरुदभूषितात् डा॰ ए.पि.जे. अब्दुलकलामतः कञ्चित् पाठं शिक्षितुं शक्नुमः । भारते अद्य विज्ञानक्षेत्रे प्रौद्योगिकीयक्षेत्रे च काचित् महती विपत्तिः समागता अस्ति । सा नाम अद्यत्वे सर्वेऽपि प्रतिभावन्तः छात्राः इञ्जिनियरिंग्, मेडिकल्, कामर्स्, मेनेज्मेण्ट्, कम्प्यूटर् - इत्येतादृशान् विषयान् पठन्ति, शुद्धविज्ञानाध्येतारः विरलाः । तस्मात् वैज्ञानिकेषु प्रयोगालयेषु शोधकर्तृणाम् अभावः दृश्यते । प्रकृतह्रासगतिः एवमेव अनुवर्तते चेत् अचिरादेव प्रयोगालयाः रिक्ताः भवेयुः इति आशङ्क्यते । एतादृशस्थिततः विंशतिवर्षाभ्यन्तरे भारतं विज्ञानप्रोद्यौगिकीयक्षेत्रयोः प्रगतदेशेषु अग्रणीस्थानं नेतुं कृतसङ्कल्पः डा॰ अब्दुलकलामः छात्रैः सह मेलनं कृत्वा तेषां विज्ञानाध्ययनाय प्रेरणार्थं देशे सर्वत्र गत्वा अभियानं कुर्वन् अस्ति । एतावता एव सः लक्षाधिकच्छात्रैः सह मिलितवान् अस्ति । उदयोन्मुखप्रतिभावतां यूनां गम्भीरतया विज्ञानाध्ययने योजनमेव एकबिन्दुकार्यक्रमः तस्य । वयं संस्कृतज्ञाः अपि अनया रीत्या चिन्तयामः चेत्.... ?

समग्रे गुजराते, कस्यापि विषयस्य बि.ए. भवतु नाम, तासु सर्वासु बि. ए.कक्ष्यासु अपि प्रथमवर्षे सर्वेऽपि छात्राः संस्कृतं पठन्ति । सामान्यतः एकलक्षच्छात्राः प्रथमवर्षे पठन्तः स्युः इति तत्रत्यैः अनुमीयते । एतेषु अर्धांशाधिकाः द्वितीयतृतीयवर्षयोः अपि संस्कृतं पठन्ति । बङ्गप्रान्ते संस्कृतबि.ए.-एम्.ए.पठितारः उपदशसहस्रजनाः सन्ति । भारतस्य सर्वेषां राज्यानाम् एतादृशी सङ्ख्या योजिता चेत् कतिपयलक्षच्छात्राः भवेयुः । अस्माभिः अग्रिमेषु केषुचित् वर्षेषु एतेषां मध्ये एव केन्द्रीकृतरूपेण यदि कार्यं क्रियते तर्हि तेभ्यः बहवः कार्यकर्तारः लभ्येरन् । बहवः गम्भीरतया

संस्कृताध्ययने प्रवृत्ताः भवेयुः च ।

**चिन्तनीयाः विषयाः**

अन्ये केचन गम्भीरतया चिन्तनीयाः विषयाः सन्ति । यथा – बङ्गसर्वकारस्य पञ्च संस्कृतमहाविद्यालयाः सन्ति । तेषु अन्यतमः कालिकातानगरे विद्यमानः राष्ट्रियसंस्कृतमहाविद्यालयः । तस्मिन् संस्कृतमहाविद्यालये षट्त्रिंशत् स्वीकृतपदानि (Sanctioned Posts) सन्ति । प्रकृतं तत्र द्वौ एव कार्यं कुरुतः । गतेषु अष्टादशवर्षेषु तत्र एकमपि पदं न पूरितम् । एकादश-द्वादशकक्ष्ययोः पाठ्यपुस्तकलेखनम् अभवत् १९७६तमे वर्षे । एतदनन्तरम् अद्यावधि तस्य पुनर्लेखनं न अभवत् । सप्तम-अष्टमकक्ष्ययोः संस्कृतपाठ्य-पुस्तकं 'संस्कृतसाहित्यसङ्ग्रहः' इत्यस्ति, यस्य लेखनम् अभवत् १९६९तमे वर्षे । तदनन्तरम् अद्यपर्यन्तं तस्य परिष्कारः नाभवत् । परिष्कारः दूरे एव, १९७७ तमवर्षानन्तरं तस्य पुनर्मुद्रणम् अपि सर्वकारेण न कृतम् । यतः पुस्तकानि एव अनुपलभ्यमानानि क्रियन्ते चेत् मार्क्स्मानसानां तत्रत्यानां 'हिडन् एजेण्डा' साधितं भवति खलु ?

गुजराते अष्टम-नवम-दशमकक्ष्यासु संस्कृतपाठनं भवति । नवनवति-प्रतिशतं छात्राः तत्र संस्कृतमेव स्वीकुर्वन्ति इति स्थितिः अस्ति । इदानीं तत्र यद्यपि षष्ठकक्ष्यायां संस्कृतपाठनम् आरब्धम्, तथापि तत्र कृतः अन्यः कश्चन उपक्रमः संस्कृतशिक्षणम् अचिरादेव नाशयिष्यति इति भाति । तन्नाम, एतावत्पर्यन्तं तत्र दशमकक्ष्या-परीक्षायाः फलितांशसन्दर्भे अङ्कानां प्रतिशत-गणनाय संस्कृतमपि अन्तर्भाव्यते स्म । षट् विषयाः च भवन्ति स्म तत्र । इतःपरं तु पञ्च विषयाः एव भविष्यन्ति । अर्थात् संस्कृताङ्काः न परि-गणयिष्यन्ते । (उत्तीर्णतायै परिगणयिष्यन्ते, प्रतिशतगणनार्थं न ।) एतादृशपरिवर्तनस्य मूलं प्रो॰ यशपालसमितिसंस्तुतिः, तथा च केन्द्रीय-माध्यमिकशिक्षाबोर्ड्पाठ्यचर्यायाः अनुसरणं च । प्रो॰ यशपालेन उक्तं यत् 'दशमकक्ष्यायां बोर्ड्-परीक्षावसरे छात्राणां मनस्सु भारः अधिकः भवति, अतः पञ्च विषयाः एव (त्रयः विषयाः, भाषाद्वयं च) भवेयुः इति । तदनुसारमेव, इदानीं केन्द्रीय-माध्यमिकशिक्षाबोर्ड्परीक्षासु पञ्च परीक्षापत्राणि ।

तस्य अनुसरणम् आरब्धवन्तः राज्यसर्वकारबोर्ड्जनाः । अत्र समस्या नाम संस्कृतम् इदानीं प्रतिशतार्थं न परिगणयिष्यते इति, क्रमशः उत्तीर्णतायै अपि नावश्यकम् इत्यपि भवेत् । एकवारं दशमकक्ष्यायां नास्ति इति भवति तर्हि तत्पूर्वतनकक्ष्यासु छात्राः संस्कृतं गम्भीरतया न पठिष्यन्ति एव । अन्यच्च दशमकक्ष्यायां यदि न भवति तर्हि तदनन्तरकक्ष्यासु तु संस्कृतं न भविष्यत्येव । एवं गुजराते शिक्षातः संस्कृतस्य च्युतेः प्रथमम् अपायघण्टावादनम् इदानीं जातम् अस्ति इति अस्माभिः अवगन्तव्यम् ।

कर्णाटके अपि अग्रे अपायः भविष्यति । तत्र एतावत्पर्यन्तम् उच्चप्राथमिकं नाम सप्तमपर्यन्ताः कक्ष्याः इति, माध्यमिकं नाम अष्टमनवमदशमकक्ष्याः इति च काचित् व्यवस्था आसीत् । इतःपरं केन्द्रीयरचना अनुसरणीया इति कृत्वा षष्ठ-सप्तम-अष्टमकक्ष्याः उच्चप्राथमिकाः, नवमदशमकक्ष्ये माध्यमिके इति पुनारचनं भविष्यति । तदा प्रकृतसंस्कृतशिक्षकाः उच्चप्राथमिकविभागं प्रेषयिष्यन्ते इति निश्चितम् । माध्यमिकविभागे शिक्षकाणां नियुक्तिः कदाचित् न क्रियेत अपि । तेन षष्ठ-सप्तमष्टमकक्ष्यासु संस्कृतपाठनं भवेत्, नवमदशमयोः न !

कर्णाटके अन्योऽपि प्रयत्नः व्यवस्थितरूपेण प्रचलति, सफलतासमीपे अस्ति अपि । तन्नाम, 'संस्कृतं प्राचीनभाषा' (Classical Language) इति उक्त्वा त्रिभाषासूत्रतः संस्कृतस्य अपसारणाय समितिरचनां कृत्वा तस्याः समितेः द्वारा तादृशी संस्तुतिः अपि कारिता अस्ति ।

एतादृशाः बहवः विषयाः सन्ति येषां विरुद्धं महत् जनान्दोलनम् उत्पादनीयं भवेत् । प्रजातन्त्रे प्रजानां सार्वत्रिकेण, सार्वजनीनेन च आक्रोशेन, अनुरोधेन वा विना किमपि साधितं न भवति । तादृशं जनान्दोलनं सङ्घटयितुं महत् जनबलं (सङ्घटनं) धनबलं च आवश्यकं भवति । संस्कृतहितरक्षणाय सङ्घर्षकरणकालः आगतः अस्ति । परम् अस्माकं दौर्भाग्यं, तादृशं बलवत् सङ्घटनम् अस्मदीयं इतोऽपि न निर्मितम् । तथापि दौभर्ाग्यमिति चिन्तयन्तः तूष्णींभाविनः अपि वयं नैव स्याम । शरसन्धानमपि वयं जानीमः, तदर्थमपि सज्जाः भवेम । महायुद्धं भविता । कुरुक्षेत्रं तु भारतजनमानसम् । विजयः

निश्चितः, परं मार्गः कियद्दूरवान्, कियान् कठिनः, कियान् श्रमकारकश्चेति न जानीमः । कियदपि भवतु नाम, शरविमुक्तः बाणः लक्ष्यभेदनपर्यन्तं मध्ये न विरमति । परं तु संस्कृतहितरक्षणाय सङ्घर्षं कर्तुं, लोकजागरणाय, लोकशिक्षणाय च शीघ्रातिशीघ्रं महत् जनसङ्घटनं सङ्घटनीयम् । तदर्थं त्वर्यताम् ! कालः परिस्रवति हस्तात् !!



[सम्भाषणसन्देशः - फेब्रवरी, २००२]

# ९. सन्निहिता काचित् विपद्

पूर्वं संस्कृतस्य बहवः आधाराः आसन्, यथा - धार्मिकक्षेत्रं, शिक्षाक्षेत्रं, वाणिज्यं, प्रशासनं, वैद्यकीयं, शास्त्र-साहित्य-सङ्गीत-नाटक-कलादि-क्षेत्राणि च । एतेषु सर्वेषु अपि क्षेत्रेषु अखिले भारते समाना माध्यमभाषा तु संस्कृतमेव आसीत् । परम् अतीतासु कासुचित् शताब्दीषु क्रमशः एकैकस्मात् क्षेत्रात् संस्कृतम् अपसृतं सत्, च्युताधारं सत् अधुना शिक्षाक्षेत्रमात्रे शिष्यते । धार्मिकक्षेत्रे यद्यपि केषाञ्चित् स्तोत्राणां मन्त्राणां श्लोकानां च क्वचित् श्रवणं भवति, तथापि पूजा-कर्मकाण्ड-प्रार्थनादिषु अपि अद्यत्वे प्रादेशिकभाषाणां प्रयोगप्राचुर्यम् आरब्धम् । अतः अद्य शिक्षाक्षेत्रमात्रं संस्कृतस्य आधारः, (एकमात्रम् आधारः) इति वक्तुं शक्यते ।

संस्कृतस्य दृष्ट्या शिक्षाक्षेत्रस्य विभागत्रयम् -

१. विद्यालयीयशिक्षा (१०-१२कक्ष्यापर्यन्तम् ।)

२. महाविद्यालय-विश्वविद्यालयीयशिक्षा (BA-MA-BEd-PHD)

३. पारम्परिक-पाठशालीयशिक्षा (मध्यमा-शास्त्रि-आचार्य-इत्यादि) चेति । तेषु विद्यालयीयशिक्षायां संस्कृतस्य स्थानमस्ति चेदेव तत्र संस्कृतं स्वीकृतवन्तः अनन्तरं महाविद्यालयेषु (BAकक्ष्यासु) पारम्परिक-पाठशालासु (मध्यमा - शास्त्री - इत्यादिषु) वा छात्राः भविष्यन्ति । महाविद्यालयेषु पारम्परिकपाठशालासु च संस्कृतं स्वीकृतवतां वृत्तिः/नियुक्तिः/ उपजीविका भवति प्राथमिकमाध्यमिक-उच्चमाध्यमिक-विद्यालयेषु । अतः महाविद्यालयादि-आधुनिकशिक्षणे संस्कृतस्य अवस्थितिविषये पारम्परिक-पाठशालानां जीवनमरणसम्बन्धे वा निर्णायकं भवति विद्यालयीयशिक्षायां संस्कृतम् इति विषयः, यतः तत्र छात्रदानम्, आजीविकादानम् इति उभयमपि

करोति विद्यालयीयशिक्षा । छात्राभावे संस्कृतविभागाः पिहिताः भवेयुः । संस्कृतपठनानन्तरं यदि आजीविका न लभ्येत तर्हि अपि जनाः संस्कृतं किमर्थं पठेयुः ?

विद्यालयीयशिक्षायां संस्कृतस्य स्थानविषये कश्चन महान् अपायः सन्निहितिः अस्ति । सः अपायः सरलतया दृष्टिगोचरः न भवति । तथा अदर्शने एकं कारणं तु - यत् 'मरणं' जायमानम् अस्ति तद् 'तत्क्षणमरणं' न ; अपि तु 'शनैर्मरणम् ।' यथा - अधुना यत्र कुत्रापि संस्कृतशिक्षकाणां निवृत्तिः जाता चेत् तत्र तेषां पुनर्नियुक्तिः न भवति । तेन कारणेन तत्र सः विषयः समाप्तः भवति । पञ्चाशतः वर्षेभ्यः पूर्वम् विद्यालयेषु इतरभाषाणां यावन्तः कालांशाः आसन् तावन्तः एव संस्कृतस्यापि आसन् । क्रमशः ते कालांशाः न्यूनाः अभवन् । अद्यत्वे इतरभाषाणां सप्ताहे ६-७ कालांशाः भवन्ति चेत् संस्कृतस्य भवन्ति २-३ कालांशाः । एवं कालांशदानविषये महती न्यूनता दृश्यते । पूर्वं पञ्च वर्षाणि यावत् संस्कृतस्यापि पठनं भवति स्म, इदानीं त्रीणि वर्षाणि एव । एवं तत्र तत्र स्वल्पा स्वल्पा हानिः निरन्तरतया गतपञ्चाशद्वर्षेषु जायामाना एव आसीत् । जायमाना सा स्वल्पा हानिः दृष्टिगोचरतां न याति स्म । आहत्य अद्य संस्कृतेन एषा दुरवस्था प्राप्ता ।

प्रकृतं वयम् अग्रिमेषु. २५वर्षेषु किं भवेदिति चिन्तयामः । (यदि वयं जागरिताः स्याम तर्हि)

देशे प्रतिष्ठिताः सर्वे माध्यमिकविद्यालयाः केन्द्रीयमाध्यमिकशिक्षाबोर्ड्-सम्बद्धाः भवन्ति । तेषु विद्यालयेषु इदानीं ६-७-८कक्ष्यासु, भाषात्रयं पठनीयम्, अनन्तरं भाषाद्वयमेव । भाषात्रयं यदा भवति तदा अपि कष्टेन एव संस्कृतेन स्थानं लभ्यते । यतः आंग्ल-हिन्दी-प्रादेशिकभाषाणां प्राथमिकता भवति । संस्कृतस्वीकर्तारः विरलाः भवन्ति । किञ्च, राज्यसर्वकाराः अपि केन्द्रीयमाध्यमिक-शिक्षा-बोर्ड्मध्ये या व्यवस्था अस्ति ताम् अनुसर्तुम् आरब्धवन्तः । संयुक्तबिहारे दशमपर्यन्तं संस्कृतम् आसीत् । यदा झारखण्डराज्यं पृथक् अभवत् तदा ते केन्द्रीयमाध्यमिकशिक्षाबोर्ड्-

पाठ्यक्रमम् एव अनुसृतवन्तः इति कारणतः तत्र नवम-दशमयोः कक्ष्ययोः संस्कृतं नास्ति । कर्णाटके एतावत्पर्यन्तं तु ६,७कक्ष्ये उच्चप्राथमिकत्वेन, ८-९-१० कक्ष्याः माध्यमिकत्वेन च परिगणिताः आसन् । इतःपरं ६-७-८ कक्ष्याः उच्चप्राथमिकत्वेन ९-१०कक्ष्ये माध्यमिकत्वेन परिगणनीयाः इति काचित् व्यवस्था भविष्यति । किञ्च तदा संस्कृतशिक्षकाः उच्च-प्राथमिकविभागाय प्रेषयिष्यन्ते इति निर्णीतम् । तदा माध्यमिकस्तरे संस्कृतस्य का गतिः ? एतमेव क्रमं महाराष्ट्र-गुजरात-आन्ध्र-उत्कल-केरलराज्यानि अपि अनुसरिष्यन्ति चेत् ? केन्द्रीयविद्यालयेषु नवम-दशमकक्ष्ययोः सर्वे संस्कृतं यथा स्वीकुर्युः तथा कर्तुं (पूर्वं तथा आसीत् ।) तयोः कक्ष्ययोः भाषात्रयं भवतु इति प्रार्थिते सति केन्द्रीयविद्यालय-सङ्घटनस्य आयुक्तेन उक्तं यद् ''केन्द्रीयमाध्यमिकशिक्षा-बोर्ड्मध्ये यदा पञ्च विषयाः एव भवन्ति, अस्माकं विद्यालयेषु संस्कृतस्य स्थापनेन यदि आहत्य षड् विषयाः भवन्ति तर्हि अस्माकं छात्राणाम् अन्याय्यं भवति । अतः तथा कर्तुं न शक्यते'' इति । तस्य एव वादं राज्यसर्वकाराः अपि प्रति-पादयिष्यन्ति चेत् (गुजरातादिषु केचन आरब्धवन्तः सन्ति !) राज्येषु अपि नवमदशमयोः संस्कृतं न भवेत् ! नवमदशमकक्ष्ययोः संस्कृतं केऽपि न पठिष्यन्ति तर्हि तदनन्तरकक्ष्यासु महाविद्यालयादिषु केऽपि संस्कृतं न पठेयुः !

अपरा विपद् नाम - इदानीं सङ्गणकम् इति विषयः माध्यमिकस्तरे एव आरब्धः अस्ति । कालांशाः तु अधिकाः नाभवन् । विद्यमानेषु कालांशेषु एव सङ्गणकाय अपि समयः दातव्यः । तर्हि अन्यत्र कुत्रापि समयः न्यूनीकर्तव्यः ! कुत्र.. ? संस्कृतमेव बलिपशुः ! आंग्लभाषा आवश्यकी आसीत्, संस्कृतं बलिं दत्तवन्तः । हिन्दी देशे सर्वत्र पठनीया, संस्कृतं बलिः । प्रादेशिकभाषा पठनीया, संस्कृतभाषा बलिः जाता !

वर्षद्वयपूर्वं NCERT द्वारा Curriculum Framework for School Education (NCFSE) प्रकाशितम् । तस्मिन् संस्कृतस्य महती प्रशंसा तु कृता । परन्तु क्रियानिर्देशभागे संस्कृतस्य किमपि उत्तमं

स्थानं न कल्पितम् । न केवलं तावत्, यदि तस्य क्रियान्वयनं क्रियते तर्हि यत्किञ्चित् संस्कृतम् अद्य विद्यालयीयशिक्षायाम् अस्ति तदपि गच्छेत् ।

NCFSE मध्ये भाषानीतिः एवमस्ति –

- I, II कक्ष्ये - एका भाषा - मातृभाषा /प्रादेशिकभाषा
- III,IV,V कक्ष्याः - एका भाषा - मातृभाषा /प्रादेशिकभाषा
- VI,VII,VIII - तिस्रः भाषाः - मातृभाषा / प्रादेशिकभाषा, आधुनिकभारतीयभाषा, आंग्ला
- IX, X कक्ष्ये - तिस्रः भाषाः - मातृभाषा / प्रादेशिकभाषा, आधुनिकभारतीयभाषा, आंग्ला

संस्कृतम् अद्यपर्यन्तं Classical Languages इति सूच्याम् अस्ति इति कारणतः उपरितन-योजनानुसारं तत्र संस्कृतं न भवति । अतः NCERT द्वारा NCFSE मध्ये उक्तं यत् '६-७-८कक्ष्यासु मातृभाषया प्रादेशिकभाषया सह संयुक्तभाषारूपेण संस्कृतस्य पठनं भवितुमर्हति' इति । तत्र अस्माकम् आक्षेपः तु एवम् -

१. अतिरिक्त-ऐच्छिकभाषां (Additional Optional Language) तु कोऽपि छात्रः न स्वीकरिष्यति । यतः छात्राः बोर्ड्परीक्षा-समये अधिकभारं नेच्छन्ति । अतः तद् अव्यावहारिकं तथा च सा संस्कृत-विषयकोपेक्षापूर्णनीतिः ।

२. ६-७-८ कक्ष्यासु मातृभाषया/प्रादेशिकभाषया सह संस्कृतमपि संयुक्त-भाषारूपेण इत्यपि न शक्यम् । यतः कस्याः अपि प्रादेशिकभाषायाः पक्षधारिणः स्वभाषायाः अङ्कान् न्यूनीकृत्य संस्कृताय स्थानं कल्पयितुम् अवसरमेव न दद्युः । दत्तं चेदपि तेन पूर्णकालिकशिक्षकनियुक्तिः न भवति । (तदा इतरभाषाशिक्षकः एव संस्कृतमपि पाठयेत्), न वा छात्रस्य सर्वेषां भाषाकौशलानाम् अभ्यासः भवति । अतः संयुक्तभाषानीतिः अव्यावहारिकी, संस्कृतविषये उपेक्षापूर्णा च ।

समस्यायाः अस्याः परिहाराय सर्वोच्चन्यायालयस्य भूतपूर्वमुख्य-न्यायाधीशस्य न्यायमूर्तेः श्रीरङ्गनाथमिश्रस्य अध्यक्षतायां शिक्षामन्त्रालये

कृतायां सभायाम् एवं निर्णीतमासीत् यत् 'अद्यपर्यन्तं Modern Indian Languages (MIL) - आधुनिकभारतीयभाषाः इत्यस्य व्याख्यानं / निरूपणं न कदापि कृतम्, अथवा तासां भाषाणां सूची कदापि न प्रदत्ता । अतः संविधानस्य अष्टमसूच्यां विद्यमानाः सर्वाः १८ अपि भाषाः आधुनिकभारतीयभाषाः इति केन्द्रशिक्षामन्त्रालयेन स्पष्टीकरणं दातव्यम्' इति ।

भारते शिक्षाक्षेत्रे Classical Languages - 'प्राचीनभाषाः' इति संस्कृतं, पालि, प्राकृतम्, अरेबिक्, पर्षियन् – इति पञ्च भाषाः सन्ति । एषः विभागः आंग्लेयैः कृतः आसीत् । परं 'संस्कृतम् आधुनिकभारतीयभाषा एव' इत्यत्र अस्माकं वादः - संविधानस्य अष्टमसूच्याम् आधुनिकभारतीय-भाषाः केवलं सन्ति, न तु प्राचीनभाषाः; केन्द्रीयसाहित्याकादमीद्वारा अनुवादाय स्वीकृतासु २२ भाषासु संस्कृतमस्ति, न तु अन्याः प्राचीनभाषाः; दूरदर्शने आकाशवाण्यां च आधुनिकभाषाभिः वार्ताप्रसारः भवति, न तु प्राचीनभाषया' – इत्यादिरूपेण ।

'त्रिभाषासूत्रं संसदि पारितमासीत् । अतः तत्र किमपि परिवर्तनम् अपेक्षितं चेत् संसदि एव पुनः संशोधनविधेयकं पारणीयं भवेत् । अतः वयं NCFSE मध्ये कमपि परिष्कारं कर्तुं न शक्नुमः' इति NCERT वादः । (यत्र तेषाम् आवश्यकम् आसीत् तत्र ते कृतवन्तः इति तु अन्यः विषयः !)

त्रिभाषासूत्रम् अधोनिर्दिष्टरूपेण अस्ति –

1. पठनीया प्राथमिकभाषा तु मातृभाषा प्रादेशिकभाषा वा भवेत् ।
2. द्वितीयभाषा –
   १. हिन्दीभाषिराज्येषु अन्या काचित् आधुनिकभारतीयभाषा अथवा आंग्लभाषा
   २. अहिन्दीभाषिराज्येषु हिन्दी अथवा आंग्लभाषा
3. तृतीयभाषा –
   १. हिन्दीभाषिराज्येषु आंग्ला अथवा काचित्

आधुनिकभारतीयभाषा या द्वितीयभाषारूपेण न पठिता ।

२. अहिन्दीभाषिराज्येषु आंग्लभाषा अथवा काचित् आधुनिकभारतीयभाषा या द्वितीयभाषारूपेण न पठिता ।

यदि संविधानस्य अष्टमसूचीभाषाः आधुनिकभारतीयभाषाः इति परिगण्यन्ते तर्हि तत्र संस्कृतमपि अस्ति इति कारणतः संस्कृतमपि त्रिभाषासूत्रपरिधौ आगमिष्यति । परम् अद्यपर्यन्तं केन्द्रसर्वकारेण तत् स्पष्टीकरणं न प्रदत्तम् । इदानीं तु NCERT द्वारा प्रकाशितस्य NCFSE इत्यस्य सर्वोच्चन्यायालयस्य अनुमोदनं जातम् इति कारणतः, तत्र च संस्कृतस्य स्थानमेव नास्ति इति कारणतश्च संस्कृतस्य स्थानरक्षणाय अस्माभिः सर्वैः एकीभूय महता प्रयत्नेन योद्धव्यं भविष्यति । यदि तथा न करिष्यामः तर्हि अग्रिमे २०-२५ वर्षाभ्यन्तरे शिक्षाक्षेत्रतः (यद् अद्य अस्माकम् एकमात्रम् आधारस्थानम् अस्ति !) संस्कृतं पूर्णतः निष्कासितं भवेत् । तत्र संस्कृतकथा समाप्येत च !

अतः अस्माभिः तन्निमित्तं देशे किञ्चित् अभियानं चालनीयम् । प्रमुखैः बहुभिः केन्द्रीयमानवसंसाधनविकासमन्त्रिणे 'संविधानस्य अष्टमसूचीस्थभाषाः आधुनिकभारतीयभाषाः इति स्पष्टीकरणं प्रदीयताम्' इति आग्रहं कृत्वा पत्राणि लेखनीयानि ।

मानवसंसाधनविकासमन्त्रिणे चतुर्विधजनेभ्यः पत्राणि लेखयितव्यानि । ते च -

१. सांसदाः (सर्वराजनैतिकदलेभ्यः) विधायकाः च । भाजपेतरदल-पदाधिकारिणः ।
२. शिक्षणतज्ज्ञाः - वर्तमान-भूतपूर्व-कुलपतयः, शिक्षाक्षेत्रे विख्याताः
३. निवृत्ताः न्यायाधीशाः, विविधवृत्तिप्रमुखाः, विविधजाति-प्रमुखाः, मुसलमानाः, क्रैस्तवाः, साहित्य-सङ्गीतादिविविधक्षेत्रेषु विख्याताः ।
४. शैक्षिकसंस्थाः, महाविद्यालयाः, सांस्कृतिक-सामाजिक-धार्मिक-संस्थाः ।

सर्वेषां पत्रेषु एकबिन्दुरूपः अनुरोधः – 'संविधानस्य अष्टमसूच्यां (8th Schedule) स्थिताः भाषाः आधुनिकभारतीयभाषाः इति स्पष्टीकरणं दातव्यम्' इति ।

सर्वे स्वीये Letterhead मध्ये एव पत्रं लिखेयुः । अत्यधिकसंस्थाभ्यः पत्रं गच्छेत् । *पत्रसङ्केतः* – **मान्यमन्त्री, मानवसंसाधनविकासमन्त्रालय, शास्त्रीभवन, नई दिल्ली – ११० ००१**

यथा यथा पत्राणि गच्छन्ति तथा तथा ताः वार्ताः समाचारपत्रेभ्यः दातव्याः । वार्तापत्रेषु ये स्तम्भलेखकाः भवन्ति, सम्पादकाः भवन्ति तैः सह मिलित्वा तेषां द्वारा लेखाः लेखयितव्याः । यत्र शक्यं तत्र एतद्विषये सभाम् आयोज्य वार्ताः समाचारपत्रेभ्यः दातव्याः ।

एवम् एतत् कार्यम् अस्माभिः अभियानरूपेण करणीयम् । आधुनिक-भारतीयभाषासम्बन्धिसञ्चिका अधुना मन्त्रिणः हस्ताक्षराय मन्त्रालये प्रतीक्षायाम् अस्ति इति श्रूयते । यावत् एतदर्थं समग्रे देशे आन्दोलनं न भवति तावत् हस्ताक्षरं न सम्भाव्यते । अतः Public Pressure निर्मातव्यम् अस्माभिः ।

तावता अपि 'संस्कृतमपि आधुनिकभारतीयभाषा' इति घोषणमात्रेण कार्यं समाप्तमिति न । ततः आरम्भः भविष्यति । वस्तुतः शिक्षाक्षेत्रे संस्कृतस्य जीवनमरणप्रश्नः इदानीम् आगतः अस्ति । भारतस्य स्वातन्त्र्यसमनन्तरं शिक्षणे, प्रशासने, संविधाने वा संस्कृतेन अपेक्षितं स्थानं प्राप्तुं तदानीन्तनाः संस्कृतज्ञाः, संस्कृतानुरागिणः च शक्ताः नाभवन् । तस्य परिणामम् इदानीं वयम् अनुभवन्तः स्मः । इदानीम् एतेषु द्वित्रेषु वर्षेषु ये नीतिनिर्णयाः भविष्यन्ति तस्य परिणामः २०-२५ वर्षेषु ज्ञायेरन् । अतः इदानीं विद्यमानानाम् अस्माकं पात्रम् इतिहासे बहुनिर्णायकं भविष्यति । संस्कृतमाता स्वसुतानां कर्तव्यं कर्तृत्वं कर्मण्यतां च द्रष्टुम् उत्सहते !

❑❑

[सम्भाषणसन्देशः - डिसेम्बर्, २००२]

# ६. वयं संस्कृतज्ञाः खलु !!

दिल्लीसंस्कृत-अकादमी' द्वारा शाहसभागृहे अगस्त्मासस्य तृतीये दिनाङ्के संस्कृतदिनोत्सवकार्यक्रमः आयोजितः आसीत् । प्रतिवर्षमिव एतस्मिन् अपि वर्षे विद्यालयानां, संस्कृतशिक्षकाणां च संस्कृतसेवासम्मानकार्यक्रमः आसीत् । तत्र षट्शताधिकसंस्कृतज्ञेभ्यः पुरस्कारवितरणं कृतम् । तावन्तः अपि मञ्चम् आगत्य पुरस्कारं गृह्णन्ति स्म । पुरस्कारदातृषु अहमपि अन्यतमः आसम् इति कारणतः तत्र मम कश्चन विलक्षणः अनुभवः जातः । पुरस्कारग्रहणानन्तरम् एकैकोऽपि संस्कृतशिक्षकः 'Thank you, Sir' इति वदति स्म । 'धन्यवादः' इति कथयिता षट्शते न एकोऽपि !

किम् अत्र कश्चन पाठः नास्ति ? किं संस्कृतस्य समस्यानां मूलकारणेषु एतदपि अन्यतमं न ? एषः वातावरणप्रभावः, अथवा गतशतवर्षाणां शिक्षणस्य प्रभावः इति अहं न वदामि । आङ्ग्लाभिमानः इत्यपि न चिन्तयामि । परन्तु स्वभाषायाः संस्कृतभाषायाः प्रयोगस्य आवश्यकतायाः विषये अज्ञानम् इति चिन्तयामि । वयं संस्कृतज्ञाः खलु ?

संस्कृतसप्ताहः आचरितः । सप्ताहः आचरणीयः इत्येषा वार्ता विलम्बेन प्राप्ता इति कारणतः एतस्मिन् वर्षे तस्य संस्कृसप्ताहस्य पूर्णं लाभं स्वीकर्तुं वयं न शक्तवन्तः । संस्कृतवर्षमिव संस्कृतसप्ताहः अपि गतः । अग्रिमवर्षेषु एषः कार्यक्रमः सवैभवं भवेत्, उद्देश्यसाधकं च भवेत् । संस्कृतविद्यालये संस्कृतशिक्षकाः संस्कृतच्छात्राः च मिलित्वा कार्यक्रमम् आयोजयन्ति चेत् न पर्याप्तम् । संस्कृतम् अस्माभिः संस्कृतज्ञेतराणां मध्ये, सामाजिकानां मध्ये च नेतव्यम् । संस्कृतविभागे, संस्कृतविद्यापीठे,

संस्कृतविश्वविद्यालये वा इदानीं यः संस्कृतदिवसकार्यक्रमः भवति तमेव कार्यक्रमम् अस्मदीयव्ययेन इञ्जिनीयरिंग्महाविद्यालये, वाणिज्य-महाविद्यालये, लयन्स्क्लब्मध्ये वा तत्तत्संस्थानां सहयोगेन तत्तत्संस्थानां भवने यदि आयोजयेम तर्हि किम् अधिकः लाभः न भवेत् ?

केन्द्रसर्वकारेण देशस्य विकासाय प्रतिपञ्चवर्षम् अग्रिमपञ्चवर्षाणां वित्तीयकार्ययोजना क्रियते योजना-आयोगद्वारा (Planning Commission) । तस्याः पञ्चवार्षिकयोजनायाः अनुसारमेव तदनन्तरपञ्चवर्षेषु सर्वकारेण धनव्ययः क्रियते । प्रकृतं नवमपञ्चवार्षिक-योजनायाः अन्तिमवर्षं प्रचलति । दशमयोजनायाः अन्तिमरूपनिर्धारणं प्रचलति । इतरविषयाणां सम्बन्धे तु तत्तद्विषयसमर्थकाः स्वीयविषयाय अधिकधनव्यवस्थां प्राप्तुं प्रयत्नशीलाः सन्ति । परं संस्कृतस्य नेतृगणः...?

Central Plan Scheme for Development of Samskrit through State Governments / Union Territories इति काचित् केन्द्रसर्वकारीया योजना अस्ति । तत्र एतस्मिन् वर्षे कोटिरूप्यकाणां धनराशिः अस्ति । सितम्बरपर्यन्तं विद्यमानधनराशेः उपयोगः भविष्यति चेत् पुनरपि Revised budget मध्ये धनं प्राप्तुं शक्यते । परन्तु योग्यानां प्रस्तावानाम् अभावतः सम्पूर्णः धनव्ययः न भवति । योग्यानां प्रस्तावानाम् अभावो नाम योग्यनिमित्तं (योग्यकार्यम्), योग्यरीत्या योजनायाः लेखनं, योग्यपद्धत्या प्रेषणम् (तन्नाम राज्यसर्वकारमाध्यमेन प्रेषणम्) इति एतेषां त्रयाणाम्, अन्यतमस्य वा अभावः । विशेषतया एतासां योजनानां परिचयः संस्कृतज्ञानां स्वयं नास्ति, अथवा राज्यसर्वकारस्तरे अनुवर्तिकार्यं संस्कृतज्ञैः न क्रियते इति न्यूनताद्वयम् उपरितनयोजनासम्बन्धे बाधकम् अस्ति । एतस्याः योजनायाः अधिकं विवरणं संस्कृतभारत्याः प्रान्तीयकार्यालयेभ्यः प्राप्तुं शक्नुवन्ति भवन्तः ।

अस्माभिः नूतनवर्षशुभाशयाः प्रेष्यन्ते । अस्माकं भारतीय-काल-गणनानुसारं नूतनवर्षारम्भः वर्षप्रतिपदादिने भवति । शैक्षिकवर्षम्, आर्थिकवर्षं च किञ्चिन्मात्रेण एतेन दिनेन सङ्गच्छते, न तु आङ्ग्लेयेन

जनवरिप्रथमदिनाङ्केन । केचन (वणिजादयः) दीपावलीतः नूतनवर्षारम्भं मन्यन्ते । भवतु नाम कदाचिदपि । मया प्राप्यमाणेषु संस्कृतज्ञैः प्रेष्यमाणेषु शुभाशयपत्रेषु कतिचन सम्पूर्णतया आङ्ग्लभाषया भवन्ति । तानि दृष्ट्वा आङ्ग्लभाषायाः कारणतः खेदः न, अपि तु संस्कृतस्य अभावतः मनः दूयते । वयं संस्कृतज्ञाः खलु !

बहवः युवसंस्कृतशिक्षकाः तेषां विवाहावसरे निमन्त्रणपत्रं मह्यमपि प्रेषयन्ति । तेषु कतिचन यदा केवलम् आङ्ग्लभाषया स्थितानि पश्यामि तदा सहजतया 'वयं संस्कृतज्ञाः खलु !' इति भावः मनसि आयाति, आश्चर्यमपि ।

किञ्च अस्माभिः प्रयुज्यमानायाः भाषायाः विषये अपि किञ्चित् चिन्तनीयम् अस्ति । सद्यः प्राप्ते निमन्त्रणपत्रे प्रथमा पङ्क्तिः आसीत् – 'स्वस्ति । मान्याः, सादरनतिततयः' इति । अन्तिमपङ्क्तिः आसीत् – 'इति सप्रश्रयम् अभ्यर्थये' इति । निमन्त्रणकर्ता कश्चन संस्कृतानभिज्ञः । सः येभ्यः निमन्त्रणं दत्तवान् ते अपि संस्कृतानभिज्ञाः । निमन्त्रणस्य अनुवादकः तु कश्चन संस्कृतविद्वान् । तस्य निमन्त्रणस्य वाचकेषु कोऽपि 'नतिततयः', 'सप्रश्रयम् अभ्यर्थये' इत्येतादृशानां शब्दानाम् अर्थं ज्ञातवान् स्यात् इति मम न भाति । तदपेक्षया यदि 'प्रणामाः, सविनयं प्रार्थनां करोमि' इति शब्दाः तत्र अभविष्यन् तर्हि सर्वेऽपि अर्थम् अज्ञास्यन्, भारतीयभाषासु तेषां शब्दानां विद्यमानत्वात् ।

एवं किमर्थं भवति ? वस्तुतः समस्या अन्या एव अस्ति । संस्कृतेन लेखनसमये संस्कृतज्ञानां मनसि – 'मया लिख्यमानं जनैः अवगतं भवेत्, संस्कृतं सरलम् इति भावनिर्माणं भवेत्' इत्येषः विषयः प्राधान्यं न आवहति, प्रत्युत 'मम भाषा कथं सुन्दरी स्यात्, सरलतायाः पक्षे आश्रिते सति संस्कृतविद्वांसः मम भाषाविषये किं चिन्तयेयुः' इति विचारः एव प्राथमिकतां प्राप्नोति । किं मम प्रतिष्ठा मुख्यभूता, उत संस्कृतं सरलम् इति भावनिर्माणम्, निमन्त्रणस्य संस्कृतेन मुद्रणस्य उद्देश्यं च मुख्यभूतम् ? किं वयं 'भाषागाम्भीर्यम्' इति भाववर्तुलतः बहिः आगन्तुं न शक्नुयाम ?

गते अप्रैलमासे देहल्यां विश्वसंस्कृतसम्मेलनं प्राचलत् । तत्र प्रस्तुतेषु ६१२ निबन्धेषु ३१० निबन्धाः आङ्ग्लभाषया लिखिताः । (५१% निबन्धाः) १७ निबन्धाः हिन्दीभाषया । (१६%) संस्कृतेन २०५ निबन्धाः (३३%) आसन् । यदि इतरभारतीयभाषाभिः अपि निबन्धोपस्थापनाय अनुमतिः अभविष्यत् तर्हि संस्कृतनिबन्धसंख्यायाम् इतोऽपि महती न्यूनता अभविष्यत् । किमेतत् संस्कृतस्थितेः, संस्कृतज्ञानां स्थितेः च शोचनीयदशां न दर्शयति ?

विद्यालयीयशिक्षा, महाविद्यालयविश्व-विद्यालयशिक्षा, पारम्परिक-पद्धतेः पाठशाला-संस्कृतविश्वविद्यालयशिक्षा चेति संस्कृतशिक्षणस्य स्थानत्रयम् । तेषु पारम्परिकशिक्षणतः वास्तविकरूपेण शास्त्रशिक्षणं संस्कृतसंरक्षणं च क्रियते । महाविद्यालयविश्वविद्यालय-(बि.ए/ एम्. ए. इत्यादि) शिक्षायाः महत्त्वमेतत् यत् एषा शिक्षा प्राचीनम् अर्वाचीनेन सह योजयति, तुलनात्मकम् अध्ययनं च कारयति । परं विद्यालयीयशिक्षा या अस्ति एतस्याः महत्त्वं सर्वाधिकम् । यतः अन्ययोः द्वयोः क्षेत्रयोः अधीतवताम् उपजीविकाप्रदानं करोति विद्यालयीयशिक्षाव्यवस्था । महाविद्यालयविश्वविद्यालयेभ्यः संस्कृतच्छात्रान् ददाति विद्यालयीय-शिक्षाव्यवस्था । एषा एव शिक्षाव्यवस्था समाजे 'संस्कृतं कठिनं, जामिताकारकं च' इति भावनिर्माणं करोति । एषा एव व्यवस्था संस्कृतं सरलम् इति भावनिर्माणमपि कर्तुं शक्नुयात् यदि .......!! परन्तु एतदेव शिक्षास्थानम् अद्य अत्यन्तम् उपेक्षितम् । सर्वकारेण उपेक्षितं चेत् सा अन्या कथा । किन्तु हा हन्त ! अस्माभिः संस्कृतज्ञैः अपि उपेक्षितम् अस्ति सा !!

केन्द्रीयमाध्यमिकशिक्षाबोर्ड्(C.B.S.E.)सम्बद्धविद्यालयेषु गतवर्षे कतिपयविद्यालयेषु नवमकक्ष्यायां प्रयोगरूपेण सम्प्रेषणविधिना (Communicative Approach) संस्कृतस्य पाठनम् आरब्धम्, तदर्थं 'मणिका'नामकानि पुस्तकानि अपि रचितानि । एतस्मिन् वर्षे तु सर्वेष्वपि विद्यालयेषु समग्रदेशे नवमकक्ष्यायां सम्प्रेषणविधिना 'मणिका'पुस्तकानि पाठनीयानि इति सूचितम् । परन्तु सर्वत्र संस्कृतशिक्षकाः स्वयं

संस्कृतसम्भाषणे अकृताभ्यासाः इति कारणतः तेषामेव काठिन्यकारणतः ते एव कदाचित् विरोधमपि कुर्युः । अतः C.B.S.E. सम्बद्धविद्यालयानां संस्कतशिक्षकाणां प्रशिक्षणस्य महती आवश्यकता अस्ति । प्रशिक्षणं न कृतं चेत् तस्मादेव कारणात् काचित् ऐतिहासिकी क्रान्तिकारिणी, संस्कृतोन्नयिनी योजना पराजिता भवेत् । अतः वयं संस्कृतानुरागिणः कार्यप्रवृत्ताः भवेम, सत्वरमेव ।

मासात् मासद्वयात् वा पूर्वं Indian Express-दिनपत्रिकायाः रविवासराङ्के पश्चिमदेशेषु संस्कृताध्ययने उत्साहः वर्धमानः अस्ति इत्येतेन तात्पर्येण युक्तः कश्चन लेखः प्रकाशितः आसीत् । यद्यपि लेखे कतिचन उत्साहवर्धकाः विषयाः आसन्, तथापि केचन बिन्दवः संस्कृतस्य हानिकारकाः । यथा - लेखे संस्कृतस्य Classical Language इति पुनः पुनः उल्लेखः, ग्रीक्ल्याटिन्भाषावलौ संस्कृतस्य योजनम् इत्यादयः । पश्चिमदेशीयानां दृष्टौ, तेषाम् आवश्यकतादृष्ट्या च एषा पुरातनी भाषा स्यात्, परन्तु अस्माकं देशे अत्रत्यवास्तविकतानुसारम्, संस्कृतस्य जीवनस्य भविष्यतः च यः प्रश्नः अस्ति तस्य आवश्यकतायाः अनुसारं च संस्कृतस्य आधुनिकव्यावहारिकभाषात्वस्य प्रतिपादनमेव आवश्यकम् । संस्कृतं पुरातनी भाषा इति उक्त्वा एव आदौ आङ्ग्लेयैः, ततः स्वतन्त्रभारतस्य मेकालेपुत्रैः मार्क्स्सन्तानीयैः च संस्कृतं मुख्यधाराशिक्षणतः त्रिभाषासूत्रतः च दूरे स्थापितम् ।

www.Outlookindia.com इति सङ्केतस्य काचित् वेब्पत्रिका अस्ति । तस्य जुलैषष्ठदिनाङ्कस्य अङ्के (जून्षष्ठदिनाङ्कस्य अङ्के वा) संस्कृत-विषये हार्वर्ड्विश्वविद्यालयस्य संस्कृतविभागप्राध्यापकस्य किञ्चित् दीर्घं लेखनमस्ति, यच्च अत्यन्तं दुर्विचारपूर्णम् अस्ति । संस्कृतस्य हानिं कर्तुं, भारतस्य संस्कृतेः धर्मस्य च हानिं कर्तुं कथं Strategic लेखनं लेखनीयम् इति ज्ञातुं तद् पठनीयम् ! पूर्वं ब्रिटिश्जनाः यां क्रीडां क्रीडितवन्तः तामेव एषः अपि अनुवर्तयन् अस्ति । तत्र आपत्तिजनकाः विषयाः बहवः सन्ति । ते च यथा -

१. संस्कृतं Classical Language इति, उपयोगिताऽपि तावदेव - Classical Literature पठनाय इति कथयति सः ।
२. संस्कृतं तमिळु चेति उभे अपि समानपुरातन्यौ, समानयोग्यतावत्यौ इति तस्य कथनम् । उभयोः एकत्र प्रतिपादनस्य उद्देश्यं किम् ? तदेव, पुनरपि उत्तरदक्षिणभेदम्, आर्यद्रविडभेदं च अवलम्ब्य कलहनिर्माणम् ।
३. भारते संस्कृतभाषाशिक्षणम् अनिवार्यं कर्तुं न शक्यते, यतः संस्कृतं Religious भाषा अस्ति, भारते मुस्लिम-क्रैस्त-सिक्ख-जैन- बौद्धादीनि अन्यानि अपि मतानि सन्ति इति वदति सः । अस्य तु कथनस्य बहवः अन्तरार्थाः सन्ति । एकः तु - संस्कृतं Religiousभाषा इति उक्त्वा तस्य सङ्कोचीकरणम् । अन्यः तु - समाजस्य विघटनम् । अपरः तु - जनमानसे विषबीजावापः ।

एतादृशाः अन्येऽपि बहवः आक्षेपार्हाः विषयाः सन्ति तत्र ।

बहुषु राज्येषु राज्यसर्वकारैः (केन्द्रेण अपि) संस्कृतविकासाय एकपदं पुरः निधीयते, तदा तत्रैव अपरं पदं पृष्ठतः अपि स्थाप्यते । यत् पदं पृष्ठतः स्थाप्यते तद्, तस्य परिणामः वा अस्माभिः अवगतः एव न भवति । तद्यथा -

गुजरातप्रान्ते एतावत्पर्यन्तं अष्टम-नवम-दशम-कक्ष्यासु संस्कृतम् आसीत् । इदानीं षष्ठकक्ष्यातः संस्कृतपाठनम् आरब्धवन्तः सन्ति । (पाठ्यपुस्तकनिर्माणं, शिक्षकप्रशिक्षणयोजना च प्रचलति ।) परम् अपरत्र 'दशमकक्ष्यायां संस्कृतं कम्प्यूटर्शिक्षणं वा स्वीकर्तुं शक्यम्' इति नियमं कृतवन्तः इति वार्ता । किम् अद्यत्वे कोऽपि कम्प्यूटर् त्यक्त्वा संस्कृतं स्वीकरिष्यति ? यदि दशमकक्ष्यायां छात्राः संस्कृतं न पठिष्यन्ति तर्हि एकादशद्वादशकक्ष्ययोः, अनन्तरं महाविद्यालयेषु विश्वविद्यालयेषु च संस्कृतच्छात्राः कुतः ? दशम्याम् एकस्यां कक्ष्यायां नास्ति इत्यस्य अर्थः सिद्ध्यति यत् संस्कृतशिक्षणस्य अन्त्यं कल्पितम् इति । C.B.S.E. विद्यालयेषु Communicative Approach आरभ्यते, परम् अपरत्र त्रिभाषासूत्रं न अनुस्त्रियते । (तेन हानिः केवलं संस्कृतस्य, न अन्यस्याः

कस्याश्चिदपि भाषायाः) N.C.E.R.T.द्वारा इदम्प्रथमतया संस्कृतस्य महत्त्वं बहु सम्यक् प्रतिपादितं, परं पाठ्यक्रमे तु 'मातृभाषया सह संयुक्तरूपेण संस्कृतं स्वीकरणीयम्' इति सूच्यते । एतेन संस्कृतस्य स्वतन्त्रम् अस्तित्वं (शिक्षणे) परिसमाप्य शान्तिपाठः कथितः इव खलु ? केन्द्रीय-विद्यालये दशमकक्ष्यायामपि संस्कृतं स्वीकर्तुम् अवसरः कल्प्यते एकत्र, परम् अपरत्र पञ्चवर्षाणां अनिवार्यसंस्कृतशिक्षणं यत् आसीत् तस्य वर्षत्रयपरिमितत्वं कल्प्यते । एवमेव, सप्ताहे कालांशत्रयात्मकता या आसीत् तस्याः कालांशद्वयमात्रकत्वं घोष्यते । मन्त्रिणः यद्यपि संस्कृतस्य हितमेव कर्तुमिच्छन्ति तथाऽपि मन्त्रालयेषु विद्यमानाः अधिकारिणः, अन्येऽपि दुराग्रहपीडिताः मेकाले-मार्क्स्-जनाः योजनापूर्वकं विघ्नम् उत्पादयन्ति ।

संस्कृतक्षेत्रे एतावत्पर्यन्तं संस्कृतसंस्थाप्रमुखाः अनुदानार्थं प्रयत्नसमये स्वीयसंस्थायै भवनार्थं, प्राध्यापकप्रवाचकपदार्थं च प्रयत्नं कृतवन्तः, न तु महता प्रमाणेन उपजीविकानिर्माणं (Employment Generation) यथा भवेत् तथा । इदानीं U.G.C.द्वारा तादृशः कश्चन प्रयासः आरब्धः । 'पाण्डुलिपिग्रन्थानां संग्रहः, सम्पादनं, प्रकाशनं च' इति काचित् अपरा योजना । अनया योजनया राजाश्रयः लब्धः चेत् अग्रिमदशकद्वयं संस्कृतज्ञैः उपजीविका प्राप्येत ।

संस्कृतग्रन्थानाम् आंग्लभाषया भारतीयभाषाभिः वा अनुवादे एव केषाञ्चित् संस्कृतज्ञानां रुचिः अद्यापि । गतशतके तु अनुवादकार्यम् एव कृतं संस्कृतज्ञैः । तेन संस्कृतस्य उन्नतिः न जाता । एतस्मिन् शतके संस्कृतेन इतरभाषागतानां विषयाणाम् अनुवादस्य आद्यता कल्पनीया । तदा संस्कृतभाषायाः विकासः भविष्यति, संस्कृतवाङ्मयस्य समृद्धिः भविष्यति, संस्कृतज्ञानां भाषासामर्थ्यस्तरः वर्धिष्यते च ।

इदानीं देशे कश्चन वैचारिकसङ्घर्षः प्रचलति । भारतभूम्यां सञ्जाताः विकसिताः च विचाराः एकत्र । पश्चिमदेशेषु सञ्जाताः, ततः अत्र आगताः विचारधाराः अपरत्र । एतयोः द्वयोः मध्ये वयं संस्कृतज्ञाः कुत्र तिष्ठेम ?

भारतीयतत्त्वानाम् आधारेण भारतस्य भवितव्यनिर्माणं भवेत् इति जनाः काङ्क्षन्ते किम् ? किम् एतस्मिन् कार्ये वयं संस्कृतज्ञाः अग्रेसराः भवितुं शक्नुयाम ? भारतीयतायाः, राष्ट्रियतायाः, धर्मस्य च संरक्षणरूपे एतस्मिन् कार्ये, एतस्मिन् बौद्धिकयुद्धे अस्माभिः संस्कृतज्ञैः अवश्यं भागः वोढव्यः । मूकप्रेक्षकैः सर्वथा न भवितव्यम् । अयं तु शुक्तितः बहिरागमनाय संस्कृतज्ञानां कृते सुष्ठु अवसरः ।

राष्ट्रजीवनस्य सर्वक्षेत्रेषु, विशेषतः शिक्षणक्षेत्रे संस्कृतस्य यत् स्थानं नष्टम् अभवत् तत् पुनः प्राप्तुं स्वयम् अस्माभिः संस्कृतज्ञैः एव उद्यमः करणीयः भविष्यति । जनान्दोलनं सङ्घटनीयं भवेत् । संस्कृतस्य उत्थानाय वयम् एतावत्पर्यन्तं यादृशान् कार्यक्रमान् कृतवन्तः, यान् प्रयत्नान् च कृतवन्तः, तेभ्यः भिन्नविधाः कार्यक्रमाः, भिन्नविधाः प्रयासाः च करणीयाः । संस्कृतसम्भाषणपाठनं, संस्कृतभाषया अनुवादः, सर्जनात्मक-साहित्यसृष्टिं च कृत्वा समकालिक-आधुनिकसाहित्यनिर्माणं, संस्कृतेन पाठनं, दैनिक-साप्ताहिक-मासिकादि-विविधभाषा-पत्रिकासु लेखलेखनम्, प्रबुद्धजनानां नेतॄणाम् अधिकारिणां च सम्पर्कः, तेषां मनसः परिवर्तनम् इति एतादृशानि बहूनि कार्याणि प्राथम्येन करणीयानि । आम्, सदा, सर्वत्र, सर्वैः च सह संस्कृतेन सम्भाषणं तु करणीयमेव । वयं संस्कृतज्ञाः खलु ....?



[सम्भाषणसन्देशः - सप्टेम्बर्, २००२]

# ७. धियः स हि नः प्रेरयेत्

भारतीयप्रशासनिकसेवायाः (The Indian Administrative Service='IAS') इत्यस्य 'सिविल लिस्ट्' इति सूची प्रतिवर्षं प्रकाश्यते । देशे तत्तद्वर्षे विद्यमानानां सर्वेषां ऐ.ए.एस्.-अधिकारिणां सूची सा । २००१तमे वर्षे या तादृशी सूची प्रकाशिता तत्र उपपञ्चसहस्त्रजनानां नामानि सन्ति । अद्य देशे तावन्तः ऐ.ए.एस्.-अधिकारिणः सन्ति इति तस्य तात्पर्यम् । तस्याः सूच्याः अध्ययनं यदा कृतं तदा कश्चन विषयः दृष्टिगोचरः जातः । तेषु पञ्चसहस्त्रजनेषु विद्याभ्यासकाले संस्कृतं प्रधानविषयत्वेन स्वीकृत्य अधीतवन्तः कति सन्ति इति परिशीलितम् । पञ्चसहस्त्रे दश जनाः लब्धाः, ये संस्कृतं प्रधानविषयत्वेन स्वीकृत्य बि.ए.- एम्.ए.प्रभृतिषु परीक्षासु उत्तीर्णाः अभवन् । (ऐ.ए.एस्.आवल्यां संस्कृतविषयं स्वीकृत्य परीक्षाम् उत्तीर्णाः कति सन्ति इति विवरणं नास्ति, तेषां शिक्षायाम् अध्ययनविषयः कः इति तु अस्ति ।) शास्त्री, आचार्यः इत्यादिषु परीक्षासु उत्तीर्णाः तस्यां सूच्यां न आसन् ।

अत्र प्रश्नद्वयम् - १) किमर्थं पञ्चसहस्त्रे दश जनाः केवलम् अधीतसंस्कृताः ? (वर्तमानेषु ऐ.ए.एस्.अधिकारिषु संस्कृतं जानन्तः अन्ये बहवः स्युः, सः अत्र चर्चाविषयः न ।) २) शास्त्री, आचार्यः इत्यादिकम् अधीतवन्तः किमर्थं न सन्ति ?

उत्तरान्वेषणे कृते, इतरविषयाध्येतृभिः सह तुलनायां कृतायां ज्ञायते यत् संस्कृताध्येतृणां संख्या न्यूना इत्येतद् एकं कारणं स्यात् इति । परम् अपरं मुख्यं कारणं 'किं संस्कृताध्यापकैः संस्कृतच्छात्रेभ्यः तादृशदृष्टिदानं, प्रोत्साहनं, मार्गदर्शनं च क्रियते ?' इत्यपि भवितुम् अर्हति । राजस्थानराज्य-

प्राशासनिकसेवायां प्रतिवर्षं १०-१५संस्कृतज्ञाः चिताः भवन्ति इति तु तत्रत्यः कश्चन विशेषः एव । तया दृष्ट्या तत्रत्याः संस्कृतच्छात्राः उद्यमशीलाः अनुकरणीयाश्च ।

संस्कृतस्य विकासाय अस्माभिः विभिन्नप्रकारेण विश्लेषणं करणीयम् । उदाहरणार्थं - संस्कृतसम्बन्धे प्रकाश्यमानानि पुस्तकानि कीदृशानि इति । संस्कृतपुस्तकप्रकाशनं प्रकृतं कथम् अस्ति ? तत्र संस्कृतस्यैव पुस्तकानि कति ? संस्कृतसम्बन्धीनि कति ? संस्कृतभाषया प्रकाश्यमानानि कति ? इतरभाषाभिः प्रकाश्यमानानि कति ? प्राचीनविषयकाणि, वर्तमान-विषयकाणि, अनुवादः, पुनर्मुद्रणं, संस्कृतज्ञैः प्रकाशितानि, संस्थाभिः प्रकाशितानि, प्रकाशनोद्यमसंस्थाभिः प्रकाशितानि, गद्यात्मकानि, पद्यात्मकानि, सर्जनात्मकानि च कति - इत्येवं बहवः विषयाः चिन्तनीयाः । तदा अस्माकं दशा दिशा चेति उभयमपि ज्ञातं भवति । तत्कालज्ञानार्थं किञ्चित् लघु सर्वेक्षणं कारितम् । केन्द्रसर्वकारस्य संस्कृतप्रचारकार्येषु 'संस्कृतपुस्तकानां क्रयणं वितरणं च' इति काचित् योजना । तदनुसारं गतेषु केषुचित् मासेषु सर्वकारेण क्रीत्वा ग्रन्थालयेभ्यः वितीर्णानि ८२ पुस्तकानि विश्लेष्टुं बेङ्गलूरुनगरस्था संगणकतज्ज्ञा श्रीमती आशा प्रार्थिता । सा लिखति - 'तेषु ८२ पुस्तकेषु २६.८% पुस्तकानि पूर्णतः अथवा अंशतः संस्कृतभाषया सन्ति, २५.६% पूर्णतः अथवा अंशतः हिन्दीभाषया सन्ति, १८.३% पूर्णतः अथवा अंशतः इंग्लिष्भाषया सन्ति । २९.२% पुस्तकानि संस्कृतेन सह सम्बद्धानि एव न सन्ति' इति !

भारतस्य स्वातन्त्र्यप्राप्तेः अनन्तरं संस्कतस्य क्रमशः ह्रासः जायमानः आसीत् । सः ह्रासः कथं जातः, किमर्थं जातः इति प्रतिराज्यं केनचित् व्यवस्थितम् अध्ययनं करणीयम् । अत्र कतिचन उदाहरणानि दर्शयामि । एकैकस्याः तादृश्याः घटनायाः कारणतः स्वल्पा हानिः जाता, आहत्य तादृशीनां सर्वासां घटनानां कारणतः महती हानिः !

आयुर्वेदक्षेत्रं परिशील्यताम् । बहु पूर्वं तु संस्कृतविद्यालयच्छात्राः एव आयुर्वेदमहाविद्यालयं प्रविशन्ति स्म । पश्चात् संस्कृतभाषया सह द्वादश-

कक्ष्याम् उत्तीर्णानां प्रवेशः आरब्धः । अनन्तरं द्वादशकक्ष्यायां विज्ञानविषयं स्वीकृत्य अधीतवन्तः छात्राः तत्र अधिकारिणः जाताः । अधिकांशराज्येषु 'इण्टर्'कक्ष्ययोः आंग्लमाध्यमविद्यालयेषु विज्ञान-वाणिज्यविषयाभ्यां सह संस्कृतभाषापठनावसरः न भवति स्म इति कारणतः विज्ञानसंस्कृतच्छात्राः न लभ्यन्ते इति उक्त्वा आयुर्वेदमहाविद्यालयप्रवेशाय संस्कृतस्य अनिवार्यत्वं त्यक्तवन्तः नीतिनिर्णायकाः । तादृशस्थितौ पाठ्यक्रमे अपि संस्कृतभागः न्यूनः जातः । संस्कृतस्यैव द्वित्राणि पत्राणि यत्र भवन्ति स्म, तत्र एकमेव पत्रं जातम् । इदानीं 'तदपि मास्तु यतः छात्राः चरकसुश्रुतादिग्रन्थान् नावगच्छन्ति, तेषाम् अनुवादग्रन्थाः पाठ्यपुस्तकरूपेण भवन्तु' इति वादः प्राबल्यम् आवहति । अतः संस्कृतस्य 'इतिश्रीः' उक्ता इव । तत्र छात्राः आयुर्वेद-वैद्यकीयपदवीं प्राप्य अलोपति-औषधदाने समुत्सुकाः, अतः तेषां संस्कृतस्य चिन्ता नास्ति । अद्यत्वे आयुर्वेदमहाविद्यालयस्य सञ्चालकाः तु धनसम्पादनाय आयुर्वेदमहाविद्यालयस्थापनां कुर्वन्ति, न तु आयुर्वेदप्रचाराय । भारतस्य २५% आयुर्वेदमहाविद्यालयाः कर्णाटके सन्ति, तेऽपि गतेषु १०-१५वर्षेषु आरब्धाः । अद्य तेऽपि चिन्तयन्ति - 'किमर्थं संस्कृतशिक्षकाय वेतनं दातव्यं, संस्कृतभारत्याः स्वल्पकालिकीः संस्कृतकक्ष्याः चालयिष्यामः चेत् पर्याप्तं खलु' इति !

आन्ध्रप्रदेशे जनजातिकल्याण-(Tribal Welfare)मन्त्रालयस्य द्वारा उपपञ्चाशाः आवासीयाः विद्यालयाः सञ्चाल्यन्ते । तत्र संस्कृतम् अपि पाठ्यते स्म । तत्र कश्चन नूतनः अधिकारी आगतः । 'नगरीयविद्यालयच्छात्राः एव संस्कृतेन वक्तुं न शक्नुवन्ति, एवं सति एते कथं वा संस्कृतम् उच्चारयेयुः' इति वदन् सः ततः संस्कृतशिक्षकपदानि एव अपसारितवान् !

भारतस्य स्वतन्त्रतावर्षे संयुक्तपञ्जाबप्रान्ते आहत्य १४७ संस्कृत-महाविद्यालयाः आसन् । अद्य उपदशाः एव अवशिष्टाः । तेषु 'नाभा'-संस्कृतमहाविद्यालयः गतमासे अन्तिमं (?) श्वासोच्छ्वासं करोति स्म, यदा अहं तत्र गतवान् आसम् । तस्य महाविद्यालयस्य कथा तु अत्यन्तं करुणाजनिका । नाभा विख्यातम् आसीत् - प्रसिद्धः ज्योतिर्विद् पं. वंशीधरः,

भागवतटीकाकारः श्रीधरः, धर्मशास्त्रज्ञः दुर्गादत्तः इत्यादीनां महतां विदुषाम् उपस्थित्या । तत्रत्ये राजकीयमहाविद्यालये यद्यपि छात्राणां न्यूनता, तथापि सः सुष्ठु एव कार्यं निर्वहति स्म । परन्तु तस्य महाविद्यालयस्य भूमिः भवनं च गलनीयम् इति केचन प्रयत्नशीलाः सन्तः तं महाविद्यालयं पटियाला-नगरस्थसंस्कृतमहाविद्यालयेन सह समावेशयितुं शासनादेशं कारितवन्तः । जनैः कोलाहले कृते, किञ्च विधानसभायां प्रश्ने कृते शिक्षामन्त्रिणा आश्वस्तं यद् महाविद्यालये छात्रसंख्या वर्धते चेत् तं महाविद्यालयं तत्रैव रक्षिष्यामः इति । इदानीं तैः दुष्टैः महाविद्यालयस्य छात्रसंख्या यथा न्यूना भवेत् तथा द्रष्टव्यं खलु ? तदर्थं वर्षारम्भे एव महाविद्यालयस्य प्राचार्यस्य स्थानपरिवर्तनं कृतम् । तेन नूतनच्छात्रप्रवेशकार्यं न जातम् । तस्मात् पुनः महाविद्यालयस्य स्थानान्तरणम् आदिष्टम् । परं तत्रत्यः संस्कृताचार्यः श्री निगमस्वरूपशास्त्री उच्चन्यायालये अभियोगं कृत्वा स्थानान्तरणस्य स्थगनादेशं प्राप्तवान् अस्ति, यः स्ववेतनं सर्वं संस्कृतरक्षायुद्धे व्ययीकृत्य स्वयं दारिद्र्यम् आलिङ्गितवान् अस्ति । देशे तत्र तत्र केचन निगमस्वरूपशास्त्रिणः अद्यापि सन्ति इति कारणतः संस्कृतम् अद्यापि प्रवर्धमानम् अस्ति इत्ययं विषयः अन्यः । अत्र चिन्त्यमानः विषयः कथमेवं भवति, कः तस्य परिहारः इति ।

बहुषु राजकीयविद्यालयेषु महाविद्यालयेषु च संस्कृतशिक्षकस्य निवृत्तेः अनन्तरं नूतनतया नियुक्तिः न भवति । शिक्षकस्य अभावे संस्कृतच्छात्राः न भवन्ति । अनन्तरं संस्कृतच्छात्राः न सन्ति इति कारणं प्रदर्श्य संस्कृतशिक्षकपदं हिन्दीशिक्षकपदत्वेन अन्यभाषाशिक्षकपदत्वेन वा परिवर्तयन्ति । ज्ञानेन अज्ञानेन चेति उभयप्रकारेण एषा प्रक्रिया गतेभ्यः पञ्चाशद्वर्षेभ्यः प्रचलन्ती अस्ति ।

अद्य संस्कृतविकासे विद्यमानं बाधाद्वयम् अत्र उल्लिख्यते, चर्च्यते च -

१) लोकानां संस्कृतविषयकः पूर्वाग्रहः अथवा श्रद्धायाः अभावः ।

२) संस्कृतज्ञानाम् अस्माकम् असज्जता अकर्मण्यता च ।

माध्यमिकविद्यालयस्य प्रधानाचार्यः यदि संस्कृतं न इच्छति तर्हि तस्मिन् विद्यालये संस्कृतस्य विकासः असम्भवः । तत्र संस्कृतस्य ह्रासः चेत् तदनन्तरस्तरेषु, तन्नाम उच्चमाध्यमिकमहाविद्यालयविश्वविद्यालयेषु अपि

तदनन्तरस्तरेषु, तन्नाम उच्चमाध्यमिकमहाविद्यालयविश्वविद्यालयेषु अपि संस्कृतस्य ह्रासः । अतः तं प्रधानाचार्यम् आरभ्य प्रधानमन्त्रिपर्यन्तं लक्षशः जनाः (कोटिशः जनाः वा) संस्कृतस्य बाधोत्पादकाः सम्पोषकाः वा भवितुम् अर्हन्ति ! अतः अस्माभिः संस्कृतविकासाय प्रधानमन्त्रिणः केन्द्रीयशिक्षा-मन्त्रिणः वा मुखदर्शनापेक्षया 'तृणमूलस्तरे' (grass - root level मध्ये) कार्यचिन्तनं क्रियते चेत् वरं भवेत् ।

आन्ध्रप्रदेशे इदानीं नूतनतया १२०राजकीय-इण्टर्महाविद्यालयानां प्रारम्भस्य योजना अभवत् । प्रतिविद्यालयं १२ पदानि निश्चितानि । तत्र भाषाव्याख्यातृपदत्रयम् - इंग्लिष्, तेलुगु, हिन्दी चेति । शिक्षासचिवः संस्कृतविषये पृष्टः चेत् 'मन्त्रिणः निर्णयः' इति उत्तरति !

राजनीतिज्ञाः, प्रशासनाधिकारिणः, पत्रकाराः, उद्योगपतयश्चेति एते चत्वारः अद्य किमपि कर्तुम् अकर्तुम् अन्यथाकर्तुं च समर्थाः । अधिकारः एतेषां हस्तेषु वर्तते । अतः अस्माभिः एतेषां मनःपरिवर्तनाय, समग्रे देशे सुयोजितः सङ्घटितश्च प्रयत्नः करणीयः । तेषां सम्पर्कः, तेभ्यः संस्कृत-कार्यपरिचायकसाहित्यदानं, कार्यक्रमेषु आह्वानम् इत्यादीनि बहूनि कार्याणि करणीयानि ।

कतिचन कार्याणि कारयितुम् इदानीं कालः आगतः, परं वयं संस्कृतज्ञाः इतोऽपि न सज्जाः । द्वित्राणि उदाहरणानि यथा - वर्तमानः विश्व-विद्यालयानुदानायोगाध्यक्षः अत्यन्तं संस्कृतानुकूलः । महाविद्यालयेषु संस्कृसम्भाषणकेन्द्राणि यावन्ति सहस्रकेन्द्राणि अपेक्षितानि चेदपि दातुं सः सिद्धः आसीत्, परं तावन्मात्रेण सम्भाषणशिक्षकाः अस्माभिः न निर्मिताः । संस्कृतवाङ्मये विद्यमानानि विज्ञानतन्त्रज्ञानसम्बद्धानि पुस्तकानि, यावन्ति चेदपि प्रकाशयितुं सर्वकारः सज्जः, परं वयं न । महता प्रमाणेन इतरभाषासाहित्य-कृतीनां संस्कृतानुवादं कृत्वा प्रकाशयितुं व्यवस्था कृता वर्तते, परं वयं न सज्जाः । केषुचित् विश्वविद्यालयेषु गणित-रसायनशास्त्र-भौतविज्ञान-कृषि-प्रभृतीनां बहूनां विषयाणां स्नातक-स्नातकोत्तरकक्ष्याणां पाठ्यक्रमे संस्कृते विद्यमानतत्तद्विषयसम्बद्धविषयान् अपि योजयितुं केचन उपकुलपतयः

अद्य एतल्लेखनसमये कश्चन कार्यकर्ता 'इण्डियन् एक्स्प्रेस्'पत्रिकाम् आनीय तत्र प्रकाशितम् एकं चित्रं प्रदर्शितवान् । अमेरिकायाम् आतङ्कवादस्य कारणतः या प्राणहानिः जाता तस्मिन् अवसरे आतङ्कवादविरुद्धं देहल्यां यत् प्रदर्शनं कृतं, तत्र केचन हस्ते फलकानि गृहीतवन्तः आसन् । तेषु एकस्मिन् फलके 'कृण्वन्तो विश्वमार्यम्' इति लिखितम् आसीत् । तत् फलकं गृहीतवत्याः चित्रं दर्शितम् आसीत् । संस्कृतवाक्यदर्शनेन अस्माकं कार्यकर्तुः सहजः आनन्दः । तदा मम मनसि अन्यः प्रश्नः उत्पन्नः । अद्य अस्माकं संस्कृतज्ञस्य का स्थितिः अभवत् ! एकवाक्यदर्शनमात्रेण आनन्दितव्यम् आपतितम् ! यत्र सर्वैरपि वाक्यैः संस्कृतमयैः भवितव्यम् आसीत् । अतीतायाः मकरसंक्रान्तेः अनन्तरदिने 'टैम्स् आफ् इण्डिया'पत्रिकां दृष्ट्वा अपि मम आनन्दः दुःखं च जातम् आसीत् । आनन्दः आसीत् पूर्णकुम्भे जनसागरकारणतः प्रभाविताः 'टैम्स् आफ् इण्डिया'जनाः तस्याः पत्रिकायाः मुखपुटस्य उपरि वामान्ततः दक्षिणान्तं यावत् गङ्गायाः सम्बन्धिनं सम्पूर्णं श्लोकमेकं बृहदक्षरैः मुद्रितवन्तः आसन् Banner heading रूपेण । तदा मम आनन्दः आसीत् 'टैम्स् आफ् इण्डिया'पत्रिकायां संस्कृत-श्लोकदर्शनेन । दुःखम् आसीत् संस्कृतं कादाचित्कताम् आप्नोत् इति ! संस्कृतं तदा तदा quotation कृते उपयोगि जायमानम् अस्ति !

सप्ताहात् पूर्वं मया कानपुरं गतम् आसीत् । Indian Institute of Technology, Kanpur-इत्यत्र संस्कृताध्ययनकेन्द्रस्य आरम्भाय पाठ्यक्रमं चिन्तयितुं गोष्ठ्यर्थम् अहं तत्र गतवान् आसम् । तदा विषयत्रयं मया अवगतम् ।

१. वयम् अद्यपर्यन्तं संस्कृतवाङ्मये जगतः सर्वं ज्ञानं निहितम् अस्ति इति भाषणं कुर्वन्तः कालं यापितवन्तः, ततः किञ्चिदपि बहिः न आनीतवन्तः, पाठ्यक्रमाय यावदपेक्षितं तावदपि न प्रकाशितवन्तः । (यदि अभविष्यत् तर्हि B-Tech पाठ्यक्रमे तद् योजयितुम् अवसरः आसीत् !)
२. कानपुरनगरे पञ्चसु महाविद्यालयेषु संस्कृतस्य एम्.ए. पाठाः, त्रयोदशसु महाविद्यायलेषु संस्कृतस्य बि.ए. पाठाः च भवन्ति । तेषु आहत्य उप-

महाविद्यायलेषु संस्कृतस्य बि.ए. पाठाः च भवन्ति । तेषु आहत्य उप-चत्वारिंशाः प्राध्यापकाः, २५०० छात्राः च सन्ति । यदि एतावतां २५०० छात्राणामेव सम्भाषणप्रशिक्षणं सम्भाषणशिबिरसञ्चालन-प्रशिक्षणं च कुर्याम तर्हि तेषां द्वारा कानपुरनगरे एव युगपत् सहस्राधिक-सम्भाषणशिबिराणि कर्तुं शक्तवन्तः स्याम खलु ? ईदृशी स्थितिः भारतस्य बहुषु नगरेषु अस्ति । किं वयं स्थाने स्थाने परिणामकेन्द्रितां (result oriented) कार्ययोजनां कर्तुं शक्नुयाम ?

३. कानपुर I.I.T. मध्ये आरब्धं कम्प्यूटर्-संस्कृतसम्बद्धं शोधकार्यं प्रकृतं हैदराबादनगरे Indian Institute of Information Technology इत्यत्र प्रचलति । तेषां शोधकार्यम् इदानीं critical stage मध्ये अस्ति । 'व्याकरणे न्याये वा व्युत्पन्नाः उपदशाः संस्कृतज्ञाः युवानः विद्वांसः द्वित्राणां वर्षाणां समयदानं यदि कुर्वन्ति तर्हि वास्तविकं किञ्चित् कृत्वा दर्शयितुं शक्नुमः' इति तेषाम् आशयः । किं केचन युववैयाकरणाः एतदर्थं प्रेरिताः स्युः ?

प्रत्येकस्मिन् विद्यालये महाविद्यालये च (शिशुमन्दिरतः आरभ्य विश्वविद्यालयपर्यन्तं) ग्रन्थालयः भवति । ग्रन्थालयाय विविधविषयकाणां विविधभाषाणां पुस्तकानां क्रयणं भवति । पुस्तकक्रयणं करोति सः विद्यालयः । इदानीं तु तत्र संस्कृतपुस्तकानां क्रयणम् इतरभाषाभिः सह तुलनायाम् अत्यन्तं न्यूनप्रमाणेन भवति । भवति चेदपि तेषामेव पुरातनानां प्रसिद्धानां काव्यनाटकादीनाम् । यदि संस्कृतस्य शिक्षकाः, व्याख्यातारः, प्राध्यापकाश्च जागरूकाः भवन्ति, क्रियाशीलाः भवन्ति, प्राचार्येण सह ग्रन्थपालेन सह च वार्तालापं कुर्वन्ति, किञ्चिदपि प्रयत्नं कुर्वन्ति तर्हि तेषां ग्रन्थालयाय संस्कृतस्य नूतनानां वर्तमानकालिकानां पुस्तकानां क्रयणं भवितुम् अर्हति, प्रतिवर्षमपि । एवमेव वार्षिकप्रतियोगितासु पुरस्कारदानसमये नूतनानां संस्कृतपुस्तकानां वितरणं करणीयम् इति प्रयत्नः करणीयः । एतेन प्रयत्नद्वयेन एव भारते प्रतिवर्षं कोटिशः रूप्यकाणां संस्कृतनवसाहित्यविक्रयणं भवितुम् अर्हति । वयं संस्कृतज्ञाः नवम् उद्योगं (Publishing Industry in Samskrit)

स्त्रष्टुं शक्नुयाम ।

एतावत्पर्यन्तं संस्कृतभाषां Classical Language इति उक्त्वा तां त्रिभाषासूत्रस्य परिधितः बहिः स्थापितवन्तः । त्रिभाषासूत्रे मुख्यतया हिन्दी-इंग्लिष्-आधुनिकभारतीयभाषाः (Modern Indian Languages) इति एतासां तिसृणां समावेशः । तत्र आधुनिकभारतीयभाषासु प्रादेशिकभाषाः सन्ति, याः भाषाः कोटिशः जनानां सम्पर्क-व्यवहार-वाणिज्य-शिक्षण-प्रशासनानां माध्यमरूपेण सन्ति । शिक्षाक्षेत्रे अरेबिक्, पर्षियन्, पालि, प्राकृतं, संस्कृतम् चेति पञ्च भाषाः Classical Languages इति कथ्यन्ते । परन्तु कस्मिन् अपि शिक्षासम्बन्धि Document मध्ये Classical Language इत्यस्य Modern Indian Language इत्यस्य वा निरूपणं व्याख्यानं वा न कृतम् । तदर्थम् अस्माभिः NCERT पुस्तकस्य SAMSKRIT-The voice of India's Soul and Wisdom द्वारा प्रतिपादितं यत् संविधानस्य अष्टमसूच्यां याः अष्टादश भाषाः सन्ति तासु संस्कृतम् अस्ति । Classical Languages न सन्ति, केन्द्रीयसाहित्य-अकादम्या अनुवादाय स्वीकृतासु द्वाविंशतौ आधुनिकसाहित्यकभाषासु संस्कृतम् अस्ति, न तु Classical Languages, दूरदर्शने आकाशवाण्यां च संस्कृतभाषया वार्ताः प्रसार्यन्ते, न तु Classical Languages द्वारा इति । किञ्च १९८७तमे वर्षे लोकसभायां प्रश्नोत्तरावसरे केन्द्रसर्वकारस्य तदानीन्तनः राज्यशिक्षामन्त्री श्री एल्. पि. शाहीमहोदयः संस्कृतस्य प्रकृतं प्रयोगं मनसि निधाय 'संस्कृतम् आधुनिकभाषा इति परिगण्यते' इति उक्तवान् अस्ति । अर्थात् शासनेन संस्कृतम् आधुनिकभाषा इति संसदि अङ्गीकृतम् अस्ति । संस्कृतस्य नव विश्वविद्यालयाः सन्ति, ४० देशेषु २५० विश्वविद्यालयेषु संस्कृतं पाठ्यते, ५००० संस्कृतपाठशालाः सन्ति, विद्यालयेषु त्रिकोटिच्छात्राः संस्कृतं स्वीकुर्वन्ति, अद्यापि संस्कृतेन बहुधा पुस्तकानि लिख्यन्ते, प्रकाश्यन्ते च, षष्ट्यधिकाः संस्कृतपत्रिकाः प्रकाश्यन्ते, संस्कृतग्रामाः सन्ति । अतः संस्कृतम् आधुनिकभाषा इति स्पष्टम् । यदि संस्कृतम् आधुनिकभाषासूच्यां भवति तर्हि त्रिभाषासूत्रे तत् स्थानं प्राप्स्यति इति अस्माकम् उपायः ।

परन्तु विपक्षीयाः यदि वादम् उपस्थापयन्ति यत् प्रकृतं 'आधुनिक-भाषा'पदवाच्याः भाषाः यथा वाणिज्य-शिक्षा-सम्पर्क-शासन-व्यवहारादीनां माध्यमरूपेण सन्ति, तथा संस्कृतस्य स्थितिः नास्ति, सा स्थितिः दूरे तिष्ठतु नाम, किं संस्कृतविश्वविद्यालयेषु, स्नातकोत्तरसंस्कृतविभागेषु संस्कृत-महाविद्यालयेषु च पाठनस्य परीक्षायाः वा माध्यमरूपेण संस्कृतम् अस्ति ? किं तत्र आधुनिकविषयाणां पाठनं भवति, अथवा प्राचीन- (Classical) विषयाणामेव ? किं संस्कृतस्य शिक्षकाणां छात्राणां च सम्पर्कभाषारूपेण संस्कृतम् अस्ति ? किं न्यूनातिन्यूनं संस्कृतशिक्षकाणां प्राध्यापकानां वा गृहेषु संस्कृतव्यवहारः भवति ? - इति, तर्हि अस्माकं का स्थितिः भवेत् ? विपक्षीयाः इतोऽपि वास्तवस्थितिं न जानन्ति । संस्कृतविरोधिनां तादृशावबोधात् पूर्वं हे भगवन् ! भवान् एव रक्षेत् ! धियः स हि नः रक्षेत् !

❑❑

[सम्भाषणसन्देशः - अक्टोबर्, २००१]

# ८. क्रियाशीलेषु सत्सु !

कस्मिन्नपि स्थाने पदे वा योग्यः, संस्कृतप्रेमी क्रियाशीलः च जनः अस्ति चेत् सः संस्कृतार्थं बहु एव साधयितुं शक्नोति । उदाहरणद्वयेन एतत् स्पष्टं विशदीकर्तुं शक्यते -

श्री नी. गोपालस्वामी गुजरातगणस्य आय्.ए.एस्.अधिकारी । १९९६तमे वर्षे योजना-आयोगे शिक्षाविभागस्य परामर्शदातृपदे सः नियुक्तः । संस्कृतानुरागी सः पदग्रहणस्य प्रथमवर्षे एव सर्वकारस्य संस्कृतसम्बन्धिव्ययस्य द्विगुणीकरणे सफलः जातः । (तन्नाम संस्कृतनिमित्तं सर्वकारेण दीयमानस्य धनस्य द्विगुणीकरणे समर्थः जातः ।) अष्टम-पञ्च-वार्षिकयोजनायां (१९९२-१९९७) राष्ट्रियसंस्कृतसंस्थानम्, संस्कृत-शिक्षायाः संवर्धनम्, महर्षिसान्दीपनीवेदविद्याप्रतिष्ठानम् चेति लेखात्रयस्य आहत्य अनुमानितव्ययः १७.१७ कोटिरूप्यकाणि केवलम् आसन् । परन्तु श्रीमतः गोपालस्वामिनः प्रयत्नेन नवमपञ्चवार्षिकयोजनायां (१९९६-२०००) सः अनुमानितव्ययः ८३.९८ कोटिरूप्यकाणि इति अभवत् ।

दिल्लीसंस्कृत-अकादमी इत्यस्य चैतन्यमूर्तिः निदेशकः डा॰ श्रीकृष्ण सेमिवालः । तेन अकादमीमाध्यमेन प्रतिसप्ताहं सभा, सम्मेलनं, सङ्गोष्ठी, प्रतियोगिता इति कश्चन महत्त्वभूतः कार्यक्रमः आयेज्यते एव दिल्लीनगरस्य विविधेषु विस्तरणेषु । तस्य महाशयस्य व्यक्तित्वकारणतः लघुसर्वकारेण (इतरराज्यैः सह तुलनायाम् अपि) देहलीसर्वकारेण संस्कृत-अकादम्याः कृते एतस्मिन् वर्षे १.२५ कोटिरूप्यकाणि, तथा च केन्द्रसर्वकारेण ९० लक्षरूप्यकाणि चेति आहत्य २.१५ कोटिरूप्यकाणि प्रदत्तानि ।

क्रियाशीलतायाः अभावे किं भवति ? यथा केन्द्रसर्वकारस्य ९७-९८

तमवर्षस्य अनुमानिते आयव्ययपत्रके संस्कृताय १९.२३ कोटिरूप्यकाणां निर्धारणम् आसीत्, परन्तु व्ययं केवलं ६.२४ कोटिरूप्यकाणां कर्तुं शक्तवन्तः । ९८-९९ तमे वर्षे निर्धारितव्ययः आसीत् २२.९५ कोटि-रूप्यकाणि, परन्तु कृतः व्ययः समान्यतः १० कोटिरूप्यकाणाम् ।

यद्यपि अत्र न्यूनतायां सर्वकारस्य अर्थविभागस्य निर्बन्धनानि अपि कारणानि, तथापि बहुप्रमाणेन केन्द्रे, राज्येषु च संस्कृतसम्बन्धिपदेषु विद्यमानानां बहूनाम् अधिकारिणाम् अपर्याप्तक्रियाशीलता अपि कारणम् आसीत् । तेषु अधिकारिषु अधिकांशाः संस्कृतज्ञाः सन्ति ।

एतस्य वर्षस्य अर्थात् १९९९-२००० तमवर्षस्य केन्द्रसर्वकारस्य अनुमानित-आयव्ययपत्रके संस्कृताय २८ कोटिरूप्यकाणि (राष्ट्रियसंस्कृत-संस्थानाय ९.००, संस्कृतशिक्षाविकासाय १०.००, महर्षिसान्दीपनी-वेदविद्याप्रतिष्ठानाय ४.००, संस्कृतवर्षयोजनायै ५.०० इति) निर्धारितम् अस्ति । एतदर्थं देशस्य विविधभागेभ्यः विविधसंस्थाभ्यः राज्यसर्वकारेभ्यः च अनेकाः योजनाः आगच्छन्ति चेत् एव तावतः धनराशेः व्ययः साध्यः ।

योजनानां प्रेषणस्य कश्चन क्रमः भवति । तेन एव क्रमेणः पद्धत्या च योजनाः प्रेषणीयाः भवन्ति ।

वस्तुतः सर्वकारतः धनस्वीकरणम् अस्माकम् उद्देश्यं न । परन्तु सर्वकारस्य संस्कृतसम्बन्धियोजनानां सफलीकरणाय अस्माभिः साहाय्यं करणीयमेव । नो चेत् एवं भवति यत् एतस्मिन् वर्षे निर्धारितस्य धनस्य व्ययः न भवति चेत् आगामिवर्षे योजना-आयोगेन अथवा अर्थविभागेन कथ्यते यत् ''गतवर्षे संस्कृताय यद् धनं दत्तम् आसीत् तस्य धनस्य व्ययं कर्तुमेव भवतां सामर्थ्यं नासीत् । एवं सति एतस्मिन् वर्षे संस्कृताय अधिकं धनसाहाय्यं किमर्थं करणीयम् ?'' इति ।

यदि कार्याणि सफलानि भवन्ति तर्हि उत्तरोत्तरं योजनाः वर्धन्ते । अतः संस्कृतज्ञैः क्रियाशीलैः भवितव्यम् । सर्वकारेण अपि कार्यं कारणीयम् । शासनयन्त्रेण कार्यकारणमपि एकं कौशलम् । प्रयत्नेन तत् साधनीयम् । परन्तु सावधानम् ।

तथापि यदि वयं शासनमात्रस्य अवलम्बनं कुर्मः, केवलं शासनाभिमुखाः वा यदि भवामः, तर्हि संस्कृतस्य वर्तमानदशा एव अस्माकं जीवन-समाप्तिपर्यन्तमपि अनुवर्तेत ।

पञ्चदशभ्यः वर्षेभ्यः पूर्वम् अहं कर्णाटके कस्मिंश्चित् जनपदकेन्द्रे संस्कृतज्ञानां सम्पर्कं कुर्वन् आसम् । अष्टभिः संस्कृतज्ञैः अहं मिलितवान् । तेषु प्रत्येकं संस्कृतज्ञः अपि माम् उक्तवान् - ''अत्र कस्यापि उत्साहः एव नास्ति, अहम् एकः किं करोमि ?'' इति । अर्थात् 'मम उत्साहः अस्ति, अन्येषां नास्ति' इति तस्य अभिप्रायः । प्रत्येकं संस्कृतज्ञः अपि तदेव वदति !

तर्हि अत्र वास्तविकी स्थितिः का ? 'उत्साहस्य अभावः' इति वचनं कश्चन व्याजः । वस्तुस्थितिः तु तेषाम् अष्टजनानामपि 'सज्जननिष्क्रियता' !

समाजस्य देशस्य वा नाशः दुर्जनानां दुराचरणेन न; अपि तु सज्जनानाम् अनाचरणेन भवति । संस्कृतज्ञाः सर्वेऽपि मूलतः स्वभावतः एव सज्जनाः । परन्तु निष्क्रियाः । समाजे देशे च यदा सज्जनाः निष्क्रियाः भवन्ति तदा दुष्टाः शिरांसि उन्नयन्ति । सज्जनाः मौनेन उपविशन्ति चेत् दुष्टाः कोलाहलं कुर्वन्ति । सज्जनाः पृष्ठतः गच्छन्ति चेत् दुष्टाः अग्रे आगच्छन्ति । अतः सज्जनानां निष्क्रियता अकर्मण्यता च पापम् । केनचिद् ज्येष्ठेन उक्तं यत् ''अकरणापेक्षया दोषकरणमपि समीचीनतरम्'' इति । वयं कृतिनिपुणाः न स्याम, परन्तु कृतिशून्याः तु न भवेम खलु !

सङ्घसंस्थापकः डा॰ केशवबलिरामहेडगेवारः वदति स्म - ''कश्चन गोपालनामकः आसीत् । सः अतीव उत्तमः पुरुषः । सः कस्मैचित् अपि कष्टं न ददाति । कस्य अपि हानिं न करोति । कस्यापि लाभम् अपि न करोति । अस्माभिः तादृशानां गोपालानां निर्माणं करणीयं नास्ति'' इति ।

पूर्वं कस्मिंश्चित् लेखे यथा मया लिखितं, संस्कृतज्ञानाम् अस्माकं परम्पराद्वयम् । ज्ञानस्य परम्परा, क्रियाशीलतायाः परम्परा च इति । यथा अस्माभिः ज्ञानपरम्परा अद्यावधि रक्षिता, तथैव क्रियाशीलतापरम्परा अपि रक्षणीया । अतीयमानशतके क्रियाशीलतापरम्परा विस्मृता इति कारणतः रोदनपरम्परा आरब्धा । इदानीं रोदनं स्थगयामः चेत् सहजतया पराक्रमः

पुनः प्रादुर्भवेत् ।

बहवः 'संस्कृतस्य स्थितिः किञ्चिद् उत्तमा भवेत्' इति प्रतीक्षां कुर्वन्ति । अथवा केऽपि संस्कृतस्य किमपि हितं कुर्युः इति अपेक्षां कुर्वन्ति । वयं तादृशीं प्रतीक्षाम् अपेक्षां वा अकुर्वन्तः संस्कृतस्य उज्ज्वलभवितव्यस्य कारणकर्तृषु अन्यतमाः भवामः चेद् ? आरम्भशूरत्वं मास्तु इति कारणेन अनारम्भशीलत्वं न आश्रयणीयं खलु ! द्वितीयस्य अपेक्षया प्रथममपि वरम् ।

शरीरे हृदयं निष्क्रियं सत् स्थगितं भवति चेत् शरीरं मृतं भवति । एवमेव संस्कृतस्य हृदयरूपी संस्कृतज्ञः निष्क्रियः भवति चेत् संस्कृतस्य किं भवेत् ?

सक्रियता सफलतायाः जननी ।

कृतिशीलता कृतिवीराणां यशसः रहस्यम् ।

संस्कृतज्ञस्य गतिः एव संस्कृतस्य प्रगत्याः कारणम् । अतः गतिमान् संस्कृतज्ञः एव महान् । गतिशीलता एव अद्य कालस्य आवश्यकता ।

यत्किञ्चिदपि कार्यं भवतु, परन्तु कार्यस्य आरम्भः भवतु ।

कवेः श्रीमतः जनार्दनहेगडेमहोदयस्य 'कृत्वा नवदृढसङ्कल्पम्' इति गीतस्य अन्तिमं पङ्क्तिद्वयं स्मरामः –

'समोत्साहिनो निरुद्वेगिनो
नित्यनिरन्तरगतिशीलाः ।।'



[सम्भाषणसन्देशः – जून्, १९९९]

# ९. शरीरं न, आनुकूल्यं न, इच्छाशक्तिः साधयति

एषः कश्चन विलक्षणः प्रेरणापुरुषः । कस्मिंश्चिदपि क्षणे तस्य मरणं सम्भावितं चेदपि सः तावत् प्रतिक्षणं जगतीतले निर्धनबालिकानां कुरूपनिवारणाय गृहीतशस्त्रः सन् यत्नरतः प्रवासशीलश्च । प्रत्येकं व्यक्तौ दैवत्वं पश्यतः तस्य डा॰ शरदकुमारदीक्षितस्य मरणम् अस्माकं सर्वेषाम् इव यद्यपि भविष्यत्येव, तथापि अस्मासु बहूनां यथा न भवेत् तथा तस्य मरणस्य अनन्तरमपि सः तावत् जीवेत् - येषां मुखानि सः सुन्दरीकृतवान् तेषु सुन्दरमुखेषु, येभ्यः नेत्रेभ्यः सः स्पष्टदृष्टिं दत्तवान् तेषु नेत्रेषु, येषां जीवनेषु सः आनन्दम् आशां च आनीतवान् तेषु जीवनेषु च । सः जीवनम् इच्छति । किमर्थम् ? एतदर्थं यत् जनानां मुखेषु विद्यमानान् चर्म-मांस-विकारान् परिवर्त्य तत्र सौन्दर्यम् आनेतव्यम् इति ।

डा॰ शरदकुमारदीक्षितः, यस्य नाम नोबेल्पारितोषिकाय द्वित्रवर्षतः प्रतिवर्षं संस्तूयमानम् अस्ति, सः १९३१तमे वर्षे विदर्भप्रान्तस्य वर्धानगरे जातः । निर्धनकुटुम्बे सञ्जातः सः आर्थिकसङ्कष्टेन परिश्रमेण च अधीत्य वैद्यः जातः । उच्चाध्ययनाय अमेरिकाम्, इंग्लेण्ड्देशं च गत्वा तत्र Cosmetic, Plastic, Reconstructive & Hand Surgery इति विषयेषु तज्ज्ञः अभवत् । न्यूयार्कनगरे चिकित्सकः अभवत् ।

इदानीं डा॰ शरदकुमारदीक्षितः ७२ वर्षीयः युवकः ! विश्वे सर्वत्र सञ्चरन् शल्यचिकित्साशिबिराणि चालयन् अस्ति सः । 'A Surgeon in the wheelchair इति तस्य ख्यातिः । शरीरे विशेषतया मुखे, ओष्ठ-नेत्र-कर्णादिषु च विविधकारणैः चर्मविकारः, कर्तनम् इत्यादिकं जातं चेत् येषां मुखे कुरूपता भवति, तेषां मनस्सु पीडा भवति, आत्महीनभावना च

भवति । विशेषतया एतैः एव कारणैः तादृशीनां बह्वीनां बालिकानां विवाहोऽपि न भवति । यद्यपि एतादृशेषु अवसरेषु Cosmetic Surgery, Plastic Surgery द्वारा तान् विकारान् निवार्य मुखानि सुन्दराणि कर्तुं शक्यते, परं सा शल्यचिकित्सा बहु व्ययसाध्या । जनानां समीपे तावत् धनं न भवति इति कारणतः लक्षशः जनाः तादृशशल्यचिकित्साविषये चिन्तयितुमपि न शक्नुवन्ति । डा० शरदकुमारदीक्षितस्य जीवनसौन्दर्यं नाम विशेषतया एतादृशीनां पीडितानां निर्धनानां (तत्रापि मुखविकारकारणेन यासां विवाहः न अभवत् तादृशीनां बालिकानां) मुखेषु सौन्दर्यस्य आनयनम् । सर्वमपि तत्कार्यं सः सेवाभावनया अर्थात् निःशुल्करूपेण करोति । अद्यपर्यन्तं तेन ९५,००० जनानां शल्यचिकित्सां कृत्वा मुखविकाराः निवारिताः । अमेरिकादेशे एतावतां जनानां शल्यचिकित्साव्ययः (चिकित्सालयव्ययम्, औषधीयव्ययं च विहाय केवलं शल्यचिकित्सकानां शुल्कः) सामान्यतः ८५५ कोटिरूप्यकाणि भवेयुः !

डा० शरदकुमारस्य जीवनं किञ्चित् पश्यामः । पञ्चत्रिंशत्तमे वयसि तेन पत्नीवियोगः प्राप्तः । अष्टात्रिंशत्तमे वयसि पक्षाघातः अभवत् । सप्तचत्वारिंशत्तमे वयसि मार्गापघातेन तस्य पृष्ठवंशरज्जुः (Spinal Card) व्रणिता अभवत् येन तस्य द्वौ अपि पादौ निष्क्रियौ जातौ । पञ्चाशत्तमे वयसि तस्य कण्ठे अर्बुदरोगः (Cancer) जातः, तेन कारणेन तस्य ध्वनिपेटिका (Sound box) निष्कासिता । सप्तपञ्चाशत्तमे वयसि एकवारं, त्रिषष्टितमे वयसि एकवारं, तदनन्तरं पुनरेकवारम् एवम् आहत्य त्रिवारं हृदयाघातः अभवत् । प्रत्येकवारं हृदयाघाते जाते हृदयस्य कश्चनांशः निष्क्रियः जातः । इदानीं तस्य हृदयस्य ८५% भागः निष्क्रियः अस्ति । व्रणितपृष्ठवंशरज्वोः कारणतः शिरः अधिककालं लम्बं न तिष्ठति । तथापि अद्यापि सः चक्रयुक्ते आसन्दे उपविशन् प्रतिदिनं प्रातः अष्टवादनतः रात्रौ एकादशवादनपर्यन्तं (प्रतिदिनं १५ घण्टाः) शल्यचिकित्साप्रकोष्ठे कार्यरतः भवति । तस्य कण्ठे ध्वनेः न्यूनत्वात् तेन शल्यचिकित्साप्रकोष्ठे स्वस्य साहाय्यकेभ्यः हस्तसंज्ञया मुखभावेन वा सूचनाः दातव्याः भवन्ति ! तस्य दिनस्य आहारः

केवलं कदलीफलद्वयं चषकपरिमितं दुग्धं च !

डा॰ दीक्षितमहोदयस्य महत्याः साधनायाः यशसः पृष्ठतः विद्यमानम् एकमात्रं कारणं नाम तस्य इच्छाशक्तिः । संस्कृतभारत्याः विदर्भप्रान्तस्य अध्यक्षः डा॰ रामभाऊपुजारी नागपुरम् आगतं डा॰ दीक्षितं नागपुरविमान-स्थानके पृष्टवान् - 'भारतीयेभ्यः भवतः सन्देशः कः ?' इति । डा॰ दीक्षितमहोदयेन उक्तम् - 'कार्यं करोतु' इति एतावदेव । वस्तुतः डा॰ दीक्षितः अपि स्वजीवने तदेव कृतवान् । कार्यं कुर्वन्नेव आसीत् । स्वल्पमपि कार्यं निरन्तरं प्रतिदिनं कुर्वन्नेव भवतु, आहत्य अन्ते महत् साधितं भविष्यति इति तत्त्वं स्वजीवने दर्शितवान् सः ।

डा॰ शरदकुमारदीक्षितस्य जीवनस्य सन्देशद्वयं नाम इच्छाशक्तिः, निरन्तरकार्यकरणं च । एतत् प्रेरणाबिन्दुद्वयम् अस्मभ्यं संस्कृतकार्यकर्तृभ्यः अत्यन्तं महत्त्वभूतम् । संस्कृतक्षेत्रे अद्य अपेक्षितं गुणद्वयमपि एतदेव । प्रत्येकं संस्कृतशिक्षकः, संस्कृतच्छात्रः, संस्कृतकार्यकर्ता च एतद् गुणद्वयम् आत्मसात्करोति चेत् निश्शेष्टं संस्कृतजगत् चैतन्ययुक्तं सत् उत्तिष्ठेत् ।

डा॰ दीक्षितः शल्यचिकित्साप्रकोष्ठे भजनानि भक्तिसङ्गीतस्य ध्वनिमुद्रिकां च श्रृण्वन् कार्यं करोति । शल्यचिकित्सा अपि भगवतः पूजा इत्येव सः मनुते । सः क्रियाशीलतायाः मूर्तिमान् अवतारः, धैर्यस्य प्रतीकं, महासाधनायाः उदाहरणं, सरलतायाः निरन्तरप्रवाहः, समर्पणस्य साकारमूर्तिः च । डा॰ दीक्षितमहोदयेन सञ्चाल्यमाने शल्यचिकित्साशिबिरे भागं वहतः डा॰ कैलास अग्रवालः इत्यस्य कस्यचित् वैद्यस्य कृते तेन लिखितात् पत्रात् कतिचन वाक्यानि उद्धृत्य प्रकृतलेखने दत्तानि सन्ति । कदाचित् तानि वाक्यानि परस्परं सम्बद्धानि न स्युः, कदाचित् विषयसङ्गतिः अपि न स्यात्, परं प्रत्येकं वाक्यं स्वयंपूर्णम् अर्थपूर्णं च । कार्यकर्तृभिः एतानि वाक्यानि पुनः पुनः पठ्यन्ते चेत् तद्विषये चिन्तनं मननं च क्रियते चेत् ततः महतीं प्रेरणां, कठिनक्षणेषु मार्गदर्शनं च प्राप्तुं शक्यते ।

तानि च वचनानि सन्ति एतानि - ''कस्यचिदपि जनस्य जीवनं नदी इव भवेत् । तस्य लक्ष्यं तथा भवेत् यथा नद्याः जलं गुरुत्वाकर्षणकारणतः

पुरतः प्रवहत् एव भवति, अविरतं प्रवहत् भवति । अवरोधाः यावन्मात्रेण महान्तः प्रबलाः च सन्ति चेदपि जलप्रवाहः तान् अविगणय्य अग्रे अग्रे, निरन्तरं च गच्छन् एव भवति, महाशिलाः पर्वताः वा सन्ति चेत् तान् परिक्रम्यापि अग्रे प्रवहति । कदाचित् सुरङ्गं निर्मायापि तद्द्वारा निस्सरति ।''

''किमपि कष्टं, प्रकृतिविकोपः वा अतीर्यः न, न वा स्थायी । अस्माकं अन्तिमं लक्ष्यं भवेत् नक्षत्राणि, यानि शाश्वतानि, यानि च सर्वदैव तथैव भविष्यन्ति । कष्टानि तावत् तात्कालिकानि, मेघाः इव, ये क्षणानन्तरम् अदृश्यानि भवन्ति ।''

''वयं सम्भूय मिलित्वा, यत् साधयितुं शक्नुमः तद् एकेन जनेन साधयितुं न शक्यते - सः यावान् अपि बुद्धिमान्, शिक्षितः, धनिकः वा स्यात् नाम ।''

''जीवने महत्तमः आनन्दः तस्य कार्यस्य करणे अस्ति यत् कार्यं कर्तुं न शक्यते इति सामान्यतः सर्वैः चिन्त्यते । केवलं समस्यानां कथनं तावत् सदवसराणां सरलतया गोपनसमानं भवति । यदि केनापि कारणेन कस्यचिद् जनस्य प्रतिसरत्वं (Setback) भवति तर्हि तेन प्रतिपदं (Step back) न स्थापनीयम्, अपि तु प्रत्यागमनं (Come back) कर्तुं सज्जता करणीया । प्रत्येकम् उत्तमकार्यस्य पिता भवति विफलता, माता च भवति जागरूकता, सूक्ष्मतया कार्यकरणञ्च । प्रत्येकं सफलतायां ९०% विफलता एव, यदि ताः विफलताः न अभविष्यन् तर्हि वयं सफलतां प्राप्तुं किमपि कार्यं न अकरिष्याम । अस्माकं विफलताः सफलतायाः सोपानानि भवेयुः ।''

''जीवनं नाम काचित् अद्भुता व्यायामशाला । प्रत्येकं सन्निवेशः अभ्यासं कर्तुं कश्चन अवसरः । अस्माकं धैर्यस्य महत्तमा परीक्षा नाम हृदयभङ्गेन उत्साहभङ्गेन च विना वैफल्यानां काठिन्यानां च सम्मुखीकरणम् । जीवने यत्किमपि साधयितुं शक्यते - यदि तद् प्राप्तुं कश्चन सर्वविधसमर्पणं कर्तुं सज्जः स्यात् । जीवनस्य महत्तमं दुरन्तं नाम अस्माकं सर्वेषां नेत्रदृष्टिः (Sight) अस्ति, परं दर्शनदृष्टिः (Vision) नास्ति इत्येतदेव ।''

''जनसेवाकरणावसरे कृतकार्यतः लभ्यमानस्य भौतिकफलस्य अपेक्षया

यत्किञ्चित्सेवाकरणस्य सौभाग्यं यद् अस्ति तदेव महत्तरम् । मानवसेवायाः अपेक्षया महत्तरं भगवत्पूजाविधानम् अन्यद् नास्ति । सामान्यजनानां सुखाय कार्यकरणमेव सर्वश्रेष्ठः धर्मः ।''

''विघ्नानाम् अवरोधानां सम्मुखीकरणेन, परिहरणेन च लब्धया शक्त्या वयं महतीम् अपि प्रतिकूलताम् अतिक्रान्तुं शक्नुयाम । असाध्यमपि कार्यं साधनीयं चेत् अस्माभिः यत् अपेक्षितं यच्च साध्यं तस्य करणस्य प्रारम्भः करणीयः ।''

''जीवनम् इत्येतद् वर्तमाने एतस्मिन् क्षणे अस्ति, न तु अतीते क्षणे, न वा भविष्यति क्षणे । यदि भवान् अतीते एव जीवन् भवति तर्हि शीघ्रमेव भवान् अपि 'अतीतः' भविष्यति ।''

''प्रत्येकं जनः अपि स्वीयं सहायहस्तं प्रसारयति, किञ्च किञ्चिदिव उन्नयति चेत् न कोऽपि भारः भारायते । तथैव न कोऽपि प्रकल्पः असाध्यः स्यात् यदि प्रत्येकं भागभागी स्वीयं भागं स्वीयं कर्तव्यं सम्यक्तया निर्वहति ।''

''अस्माकं प्रकाशमानाः दीपाः सामान्यतः अनिरीक्षितस्फुलिङ्गैः प्रज्वालिताः भवन्ति । अस्माकं कार्ये श्रद्धा इत्येतद् वयं यस्य पूर्वानुमानं कर्तुं न शक्नुमः तस्मिन्नपि विश्वासकरणम् । श्रद्धायाः कारणतः वयं जीवनस्य क्षुल्लकावरणतः मुक्ताः भवामः । श्रद्धायाः अभावे भयम् इत्येतद् अस्मान् गर्ते पातयेत् ।''

''वयं मूर्खतावचोभिः, क्षुल्लकव्यवहारैः, छिद्रान्वेषणैः च परस्परं कर्तनं न कुर्याम । तथा कुर्मः चेत् यशः आनन्दः च नष्टः भवेत् । किञ्च अन्ते सम्पूर्णविफलता एव फलं भवेत् । एतादृशकार्याणि प्रगतिं बाधन्ते, साफल्यं नाशयन्ति च । कठोरानुशासनयुक्तं, परम् उदारं मनः सर्वाणि अपि कष्टानि अपसारयितुं शक्नोति ।''

''जीवनस्य महत्तमाः उपलब्धयः ताः एव याः कृतयः इतरेषाम् उपकारं कुर्वन्ति । जनाः किं वदन्ति इति एतस्मात् अस्माभिः प्रभावितैः न भवितव्यम्, अपि तु अस्माभिः यद् क्रियते तेन प्रेरितैः भवितव्यम् । उत्तमं कार्यं कर्तुं विशिष्टपरिस्थितीनां प्रतीक्षा करणीया नास्ति, परं सामान्यसन्निवेशानाम्

उपयोगाय प्रयत्नः करणीयः । अस्माभिः स्वस्य चित्रस्य अपेक्षया स्वस्य चरित्रविषये, प्रामाणिकताविषये च अधिकतया चिन्तनीयम् । यतः चित्रं तावत् भवान् कीदृशः इति अन्यैः चिन्त्यमानं, चरित्रं तावत् भवान् वास्तविकरूपेण यथा अस्ति तद् । जीवने शनैः अग्रे गमनविषये न भेतव्यं, यतः भयं भवन्तं स्थगितं करोति । यशस्विना भवितुम् जीवनेन परिपूर्णतया भवितव्यम् नास्ति । सामान्या बुद्धिमत्ता, असामान्यः परिश्रमः चेति एतौ द्वौ स्तः चेत् सर्वमपि साधयितुं शक्यते । उद्देशस्य निरन्तरानुसरणेन प्रार्थनाः सफलाः भवन्ति । जीवनं लघुभिः अंशैः निर्मितं भवति इति विषयस्य अवगमनं विना सर्वः अपि जनः महत् किञ्चित् साधयितुं प्रयत्नं करोति । सेवा नाम मानवस्य उत्तमत्वस्य सुखदसुगन्धः ''यस्य भवान् स्वोपरि कतिपय-बिन्दूनां सेचनं विना इतरेषाम् उपरि सिञ्चनं कर्तुं न शक्नोति । अन्ते च, स्वेन स्वस्मिन् विश्वासः करणीयः । यः विश्वसिति सः प्रबलः, यः संशयं करोति सः दुर्बलः ।''



[सम्भाषणसन्देशः - एप्रिल्, २००३]

# १०. सिषाधयिषा

सामान्यजनस्य महासाधकस्य च मध्ये किम् अन्तरम् ? कस्य गुणस्य कारणतः कश्चन जीवने अधिकं विशिष्टं किञ्चित् साधयति ? कः अंशः तावत् असाध्यमपि साध्यमिति दर्शयितुं कञ्चित् शक्तं करोति ? अद्यावधि जातेषु सर्वेषु अपि महापुरुषेषु कश्चन समानः सः गुणः कः आसीत् ? केन तेन एकेन गुणेन ते सर्वे असामान्याः जाताः ? कः गुणः मार्गदीपस्य अधः उपविश्यापि कृताध्ययनम् ईश्वरचन्द्रविद्यासागरं ज्ञानिनम् अकरोत् ...?

एतेषां सर्वेषाम् अपि प्रश्नानाम् उत्तरम् एकमेव भवति – सिषाधयिषा । अर्थात् साधयितुम् इच्छा । कश्चन उत्साहः । कश्चन महान् आग्रहः । यत् करणीयम् इति चिन्तयति, तत् चिन्तितं साधयितुं प्रबलतमा इच्छा । लक्ष्यसाधनाय तीव्रतरः प्रयत्नः । उद्देशपूर्तिं कर्तुं महत्तमा अभिलाषा । महत् साधनीयम् इति आकाङ्क्षा इत्येषा एव सा सिषाधयिषा ।

१८८८ तमे वर्षे कश्चन अज्ञातः युवा नरेन्द्रनाथः जिज्ञासुः सिषाधयिषुः च सन् गृहात् निर्गतवान् । १८९३तमे वर्षे मईमासस्य ३१तमे दिनाङ्के अमेरिकायात्राम् आरब्धवान् । २०.२.१८९७तमे दिनाङ्के भारतं प्रत्यागतवान् । केवलं नवसु वर्षेषु नरेन्द्रनाथः स्वामी विवेकानन्दः इति विश्वविख्यातः जातः आसीत् । अमेरिकातः तस्य प्रत्यागमनावसरे पत्रकाराः तं पृष्टवन्तः आसन् – ''अल्पेन एव कालेन भवान् अमेरिकायां युरोपमध्ये च वेदान्तविचारतरङ्गान् उत्पादयितुं शक्तः अभवत् । तत्र भवतः सफलतायाः रहस्यं किम् ?'' इति ।

विवेकानन्दः उक्तवान् – ''यदा रामकृष्णपरमहंसः ब्रह्मैक्यं प्राप्तवान् तदा वयं युवसंन्यासिनः केचन कालिकातानगरे कस्मिंश्चित् जीर्णभवने निवसामः

स्म, यस्मिन् सूर्यतापः वृष्टिजलं वा साक्षाद् अन्तः एव पतति स्म । भिक्षाटनेन कठिनरोटिकाः लभ्यन्ते स्म । यदि अस्मासु अन्यतमः बहिः गतः तर्हि अन्यैः गृहे अन्तः एव भवितव्यम् आसीत्, यतः अस्माकं समीपे एकमेव दीर्घयुतकम् आसीत् । तादृश्यामपि कठिनपरिस्थितौ अस्माकं मनसि न सूर्यतापः, न वृष्टिजलं, न वा कठिनरोटिकाः भवन्ति स्म, अपि तु एकः एव विचारः गुञ्जति स्म यत् 'गुरोः रामकृष्णस्य सन्देशः विश्वे सर्वत्र प्रसारणीयः' इति । तत् गुञ्जनमेव, सा सिषाधयिषा एव माम् एतावत्पर्यन्तम् आनयत्'' इति ।

नरेन्द्रनाथस्य व्यक्तिगतसुखभोगसिषाधयिषा न आसीत्, अपि तु भगवतः प्राप्तेः, भारतस्य दारिद्र्यनिर्मूलनस्य, हिन्दुत्वजागरणरूपस्य च महाकार्यस्य, पवित्रकार्यस्य युगकार्यस्य च सिषाधयिषा आसीत् । तस्य सत्सङ्कल्पः आसीत् । काठिन्यानां सम्मुखीकरणस्य सज्जता आसीत् । अज्ञातस्य भविष्यतः आलिङ्गनस्य धैर्यम् आसीत् । उत्साहस्य उच्छ्रायः आसीत् । पावना दिव्या भव्या च सिषाधयिषा अदम्या आसीत् । अतः एव नरेन्द्रः विवेकानन्दः जातः ।

ज्ञानं, कौशलं, योग्यदृष्टिः इति सफलतायाः आयामत्रयम् अस्ति । बहवः ज्ञानिनः भवन्ति, परं ते जीवने सफलाः न भवन्ति, तथैव बहवः कौशलवन्तः अपि । बहवः ज्ञानं, कौशलम् इति उभयगुणवन्तः चेदपि महत् साधयितुं न शक्नुवन्ति, योग्यदृष्टेः अभावात् । त्रिषु गुणेषु सत्सु अपि साधनीयम् इति इच्छा पर्याप्तमात्रेण नास्ति चेद् तेषां कार्ये रभसः न भवति । शासकीयकार्यालयान् पश्यन्तु – तत्र कार्याणि कथं प्रचलन्ति, कर्मचारिणः कथं कार्यं कुर्वन्ति, कार्योत्साहः कथं भवतीति परिशीलयन्तु । तत्र चैतन्यमेव न भवति । यत्र कार्यं साधयितुम् आग्रहः महान् भवति, तत्रैव किमपि साधितं भवति ।

'भवान् कः' इति भवान् जानाति; परं 'भवान् कः भवितुं शक्नोति' इति भवान् न जानाति !

भवान् विद्यमानं किञ्चित् दृष्ट्वा 'किमर्थम् ?' इति पृच्छति; परम् अविद्यमानस्य कस्यचित् कल्पनां कृत्वा 'किमर्थं न ?' इति किमर्थं न

पृच्छति ?

सर्वं भाग्याधीनम् इति भवान् तूष्णीं न उपविशति । यतते, प्रयतते ! स्वस्य भविष्यतः जीवनस्य पूर्वयोजनां करोति, किञ्च तां जीवनप्रतिमां साकारीकर्तुं भवान् अनितरसाधारणप्रयत्नं करोति । तत्र भवतः सिषाधयिषा अनवरुद्धा, अप्रतिहता च । वृष्टिकालस्य महाप्रवाहपूर्णनदीशक्तिः इव च ।

महत् साधयितुं भवतः ये विश्वासाः सन्ति तेषां विषये भवता उत्कण्ठेन भवितव्यम् । यथा कस्यचन युवकस्य कथा अस्ति - सः युवा १९३८ तमे वर्षे यदा जापानदेशे विद्यालये आसीत् तदा एव 'piston'नामकं यन्त्रभागं विकासयितुं प्रयत्नं कृतवान् । स्वकीयम् आविष्कारं Toyota corporation संस्थायै विक्रेतुं तेन प्रयासः कृतः । परं पुनः पुनः सः तिरस्कृतः अभवत् । सः पुनरपि विद्यालयं प्रति प्रेषितः, अपि च मित्रैः उपहसितः एतदर्थम् । परं वर्षद्वयानन्तरं सः तस्मिन् कार्ये सफलः अभवत्, 'contract' प्राप्तवान् च ।

स्वयं किं कुर्वन् अस्मीति सः जानाति स्म इति कारणतः, किञ्च तस्मिन् तस्य विश्वासः उत्कण्ठता च आसीत्, लक्ष्यसिद्धिपर्यन्तं सः बहु परिश्रमं कृतवान् इति कारणतः च सः फलं साधितवान् । यदा जापान्सर्वकारः युद्धकालीनन्यूनताकारणतः तस्मै तदीययन्त्रागारनिर्माणाय सिमेण्ट्चूर्णं न अददात् तदा सः स्वीयेन गणेन सह कार्यं कृत्वा सिमेण्ट्निर्माणस्य स्वीयाम् एव पद्धतिम् आविष्कृतवान् । युद्धस्य अनन्तरं यदा पेट्रोल्तैलस्य अभावः जापानदेशे वरीवर्तते स्म, तदा सः एव श्री होण्डामहोदयः तदीयद्विचक्रिका-(bicycle)यानस्य कृते यन्त्रं योजितवान्, अग्रे यन्त्रयुक्तद्विचक्रयानानाम् उत्पादनाय यन्त्रागारं स्थापितवान्, यत्र 'होण्डा मोटरसैकल्स्' इति सुविख्यातं मोटरसैकल्स् निर्मीयन्ते स्म । अद्य भारते अपि 'होण्डा' एव अत्यधिकमात्रेण विक्रीयमाणं मोटरसैकल् अस्ति । तस्याः सफलतायाः पृष्ठतः अस्ति श्रीमतः होण्डामहोदयस्य सिषाधयिषा ।

रामः स्वग्रामे विद्यालये माध्यमिकशिक्षणं समापितवान् । सः गणिते बहु अध्ययनं कर्तुम् इच्छति स्म । परं ग्रामे उच्चमाध्यमिकशिक्षणव्यवस्था एव

नासीत् । तस्य पिता तु 'रामः अस्माकम् आपणस्य उत्तरदायित्वं स्वीकुर्यात्' इति चिन्तयति स्म । परं रामः 'मया गणिताध्ययनं कर्तव्यं, तदर्थं लाहोर्नगरं गन्तव्यम्' इति उक्तवान् । पिता नाङ्गीकृतवान् । रामः उक्तवान् 'मया गणितम् अध्येतव्यम् एव' इति । पिता कोपेन 'गृहं त्यक्त्वा गच्छतु' इति आदिष्टवान् । रामः प्रस्थितः । गच्छन्तं रामं पिता आहूय 'पत्नीमपि आत्मना सह नयतु' इति उक्तवान् । (तदा बाल्यविवाहः आसीदित्यतः रामः विवाहितः आसीत्) बालिकां पत्नीं स्वीकृत्य रामः लाहोर्नगरं गतवान् । भिक्षया धान्यादिकं प्राप्नुवन्, 'अप्राप्तवयस्कया पत्न्या पक्वं न भोक्तव्यमिति तदानीन्तनः आचारः' इति कारणतः स्वयं पक्त्वा पत्नीं भोजयन्, मार्गदीपानाम् अधः उपविश्य पठन्, न केवलं गणितम् अभ्यस्तवान्, न केवलं स्नातकः, स्नातकोत्तरपदवीकः, डाक्टरेट् च अभवत्, अपितु गणितक्षेत्रे जगतीतले एव सर्वश्रेष्ठपदं केम्ब्रिज्विश्वविद्यालयस्य पदं यच्च पदं पुरस्काररूपेण इंग्लण्डसाम्राज्यराज्ञ्या दीयते स्म तं 'रॉंग्लर' (wrangler) पुरस्कारं पदं च प्राप्तवान् । अग्रे सः स्वामी रामतीर्थः इति जगद्विख्यातः अपि जातः । रामस्य सिषाधयिषा तं 'रॉंग्लर' अकरोत्, तस्य जिज्ञासा तं स्वामिरामतीर्थम् अकरोत् । सः स्वस्य स्वामी आसीत् ! तत्र मूलहेतुः तु सिषाधयिषा । पं० मदनमोहनमालवीयः, महात्मा गान्धी, सर्.सि.वि. रामन्, जगदीशचन्द्रंबोसः, डा० केशवराव बलिराम हेडगेवारः, डा० भीमराव अम्बेडकरः इत्येवंप्रकारेण महासाधकानां, ये च स्वीयं सिषाधयिषाकारणतः भारतस्य इतिहासे स्वीयम् अध्यायं योजितवन्तः, तादृशानाम् आदर्शभूतानां सूची अपि दीर्घा अस्ति ।

सिषाधयिषायाः चमत्कृतिं पश्यतु । कश्चन राष्ट्रियस्वयंसेवकसंघस्य प्रचारकः आसीत् । सः अन्यराज्ये वर्तमानानां क्षामपीडितजनानां साहाय्यार्थं स्वस्य कार्यक्षेत्रे मासं यावत् अटित्वा धनसङ्ग्रहं कृतवान् । अन्ते तस्य मनसि अपि महती इच्छा उत्पन्ना यत् स्वयमपि धनदानं कुर्याम् इति । परं संघप्रचारकस्य वेतनं न भवति, न वा केनापि अन्येन प्रकारेण धनसम्पादनम् । अतः सः कुतः धनं दद्यात् ? सः शान्ततया चिन्तितवान् । ततः सः रक्तदानकेन्द्रं ('ब्लड् बैंक्') गतवान् । एककूपीपरिमितं स्वीयं रक्तं दत्तवान् । तेन

प्राप्तानि त्रिंशत्रूप्यकाणि आनीय क्षामपरिहारनिधौ योजितवान् !

सिषाधयिषा स्वसम्बद्धा अपि भवति, परसम्बद्धा अपि भवति । द्वितीयायाः परिणामः महान् भवति, चिरकालं तिष्ठति च । तस्याः सुगन्धः अपि भवति !

सिषाधयिषूणां भवति चिन्तनम् उन्नतं, मनः उदारं, हृदयं विशालं, वाणी प्रेरिका, व्यवहारः विनम्रः, जीवनं स्वच्छं, शिरः शान्तं, पादौ उष्णौ, बुद्धिः बुभुक्षिता, सम्भाषणं मुक्तं, दृष्टिः समग्रा, स्मरणं पूर्वाग्रहरहितं, भाषणं भावात्मकं, वाक्यानि सरलानि, प्रयत्नः प्रामाणिकः, सम्बन्धः आत्मीयः, भावः पारिवारिकः, स्वभावः सर्वसमावेशकः, कार्यशैली सामूहिकी, अनामिकी च । वृत्तिस्तु भवति मधुकरवृत्तिः !

यदि भवान् 'शक्नोमि' इति चिन्तयति तर्हि भवान् निश्चयेन शक्नोति, सुष्ठु एव । परन्तु तदर्थं साग्रहं सोत्कण्ठं चिन्तयतु । सर्वासां यशोगाथानां पृष्ठतः विद्यमानं समानं कारणं नाम सिषाधयिषा । यद् लक्ष्यम् अस्ति तस्य सिषाधयिषा । दृष्टिः लक्ष्यतः विचलिता यथा न स्यात् तथा तदर्थं पर्याप्ता सिषाधयिषा । सम्पूर्णा सिषाधयिषा या अन्ते लक्ष्यं पूरयेदेव ।

सिषाधयिषा महदपि कष्टं, महान्तमपि त्यागं सुलभसाध्यम् इति प्रमाणयति । सुभाषचन्द्रबोसस्य भारताद् बहिः सैन्यसंघटनं भवतु, भगतसिंह-चन्द्रशेखर-आजाददादीनां बलिदानं भवतु, बाबा आम्टेमहाशयस्य कुष्ठरोगनिवारणं वा भवतु, तेषां कष्टानि न कष्टायन्ते स्म, न वा वेदनाः वेदनां जनयन्ति स्म । राजकुले जातः सिद्धार्थः स्वस्य नवविंशतितमे वयसि पत्नी-पुत्र-राजप्रासाद-सुखादिकं परित्यज्य सामान्यजनानां दुःखनिवारणाय स्वयं कष्टानि सहमानः सन् अन्ते 'बुद्धः' जातः । अद्यापि समग्रे विश्वे कोटिशः जनानां प्रेरणापुरुषः अस्ति सः । हिमालयस्य शैत्यमपि सिषाधयिषूणां साधकानां निर्वस्त्राणि अपि शरीराणि बाधितुं न शक्नोति । विफलता-सफलतयोः मध्ये अन्तरं नाम सामान्यचिन्तन-सिषाधयिषयोः मध्ये विद्यमानम् अन्तरम् !

सिषाधयिषायाम् उत्पन्नायां सत्यामेव जनः सहजतया सर्जनशीलः

परिश्रमशीलः च भवति । अतीतायाः क्रिस्तशताब्द्याः पञ्चमस्य दशकस्य (१९५०) प्रारम्भकाले 'येमन'देशस्य शासकीयाः अधिकारिणः तेषाम् अर्थव्यवस्थायाः 'रियाल्'नामकानि रजतनाणकानि व्यवहारतः अदृश्यानि जायमानानि सन्ति इति ज्ञातवन्तः । तानि सर्वाणि नाणकानि एडन्नगरं प्रति नीयन्ते स्म । ब्रिटिश्-ट्रेडिंग्कम्पनी - मध्ये (पेट्रोल पम्प् इत्यस्मिन् पेट्रोलपूरयिता) कार्यं कुर्वाणः भारतीयः कश्चन सामान्यः कर्मचारी तानि नाणकानि क्रीणाति स्म । सः कर्मचारी ज्ञातवान् आसीत् यत् तानि रियाल्नाणकानि द्रवीकृत्य पुनः घनं कृत्वा विक्रीयते चेत् 'रियाल्'मूल्यस्य अपेक्षया अपि अधिकं धनं लभ्यते इति । अतः सः लाभं कर्तुं महता प्रमाणेन नाणकानि क्रीत्वा वाणिज्यं करोति स्म । येमनसर्वकारेण विधिद्वारा तादृशकार्यस्य यावत् स्थगनं कृतं तावता कालेन सः तावत् धनं सम्पादितवान् आसीत् यत् तत् धनम् अग्रे 'पोलिस्टर् यार्न'वाणिज्यं प्रारब्धुं पर्याप्तम् अभवत् । सः एव कर्मचारी श्रीधीरूभाई अम्बानी पश्चात् 'रिलयन्स्' इति संस्थाम् आरब्धवान्, भारतस्य महत्तमः उद्योगपतिः जातः च । सिषाधयिषा इत्येषा एकव्यक्ति-जीवितकालावधौ एव कीदृशं चमत्कारं कर्तुं शक्नोति इत्यस्य अस्मत्कालीनमेव निदर्शनमिदम् ।

सिषाधयिषूणां दृष्टिः भविष्यत्कालकेन्द्रिता चेदपि ते प्रकृतक्षणस्य अपि कार्यं कुर्वन्तः भवन्ति । जीवने किं साधनीयम् इत्यस्य चित्रं मनसि कर्तुं कल्पकतागुणः, महत् साधयितुम् अपेक्षितां २०-२५ वर्षाणां कार्ययोजनां कर्तुम् अद्य किं करणीयं, श्वः किं करणीयम्, आगमिमासे किम्, अग्रिमवर्षे किं, तदनन्तरवर्षेषु किम् इति एवंप्रकारेण २०-२५ वर्षाणां कार्ययोजनां, विस्तृतयोजनां, सूक्ष्मयोजनां च कर्तुं सुदूरदर्शिता, दीर्घकालं तपः कर्तुं मानसिकसज्जता च इति एते त्रयः गुणाः सिषाधयिषूणां चिन्तने स्पष्टतां न्यूनदोषतां च आनयन्ति । भविष्यति दृष्टिः, वर्तमाने परिश्रमः, प्रयत्ने निरन्तरता च सिषाधयिषूणां कार्यसाधनहेतवः । लघुकार्यस्यापि श्रद्धया करणेन, सततं करणेन च तेषाम् आहत्य परिणामः महान् भवति । किञ्च, मया जीवने किञ्चित् महत् कार्यं करणीयम् अस्ति, भगवान् मद्द्वारा महत्

कार्यं कारयन् अस्ति इति एतत् चिन्तनम् एव अग्रे आत्मविश्वासरूपेण परिवर्तितं भवति ।

जीवने किञ्चित् महत् साधनीयम् इति तीव्रा इच्छा महत्याः विचार-धारायाः कारणतः, महतः दर्शनस्य, महत्याः दृष्ट्याः कारणतः च भवति । तादृशाः सिषाधयिषवः कदाचित् घोषितम् उद्देशं न साधितवन्तः स्युः, तथापि ते विफलाः नैव । यथा नेताजी सुभाषचन्द्रबोसः । घोषणानुसारं तेन निर्मितेन सैन्येन देहल्यां स्वतन्त्रभारतध्वजः न उड्डायितः । परं तेन कृतेन आह्वानेन लक्षशः भारतीयाः देशस्वातन्त्र्याय सर्वस्वार्पणं कृतवन्तः । तस्य कार्यतः वैचारिकदृष्ट्या च राष्ट्रमानसमेव आन्दोलितम् अभवत् । अग्रे अपि दीर्घकालं यावत् भारतीयाः ततः प्रेरणां प्राप्नुवन्तः भवेयुः च ।

सिषाधयिषवः प्रतिकूलतासु अपि स्थिरपादाः तिष्ठन्ति । ते विफलताभिः सरलतया प्रभाविताः न भवन्ति । तेषाम् आन्तरिकः आत्मविश्वासः अग्रे गन्तुं तेभ्यः साहाय्यं करोति । विफलताः तु पाठान् पठितुम् अवसराः इति ते मन्यन्ते । ते किमपि कार्यम् अपूर्णं न त्यजन्ति । यत्किमपि कार्यं यावत् अपूर्णं तिष्ठति तावत् ते उत्कण्ठिताः तिष्ठन्ति । परं यदा 'एतद् साधयितुं न शक्यते' इति स्पष्टं सिद्धं भवति तदा तद् कार्यं परित्यक्तुमपि सङ्कोचं न कुर्वन्ति ।

सिषाधयिषवः कदापि सन्तृप्ताः न भवन्ति । ते यथास्थितिरक्षणेन अपि सन्तुष्टाः न भवन्ति, न वा तैः यत् साधितं तेनापि । यावत् ते एकं लक्ष्यं साधयन्ति तावत् नूतने अन्यस्मिन् कस्मिंश्चित् इतोऽपि महत्तमे लक्ष्ये दृष्टिं निदधति । ते स्वस्य प्रयत्नस्य फलमपि ज्ञातुमिच्छन्ति । ते कृतस्य क्रियमाणस्य च कार्यमनु कार्यमध्ये वा मूल्याङ्कनम् इच्छन्ति । एतादृशं मूल्याङ्कनं तेषां कार्यस्य प्रभावकारितां वर्धयितुं सहायकं भवति ।

सिषाधयिषवः इतरैः क्रान्तमेव मार्गं क्रान्तुं न उत्सहन्ते । नूतनानां मार्गाणां निर्माणं कृत्वा गमने तेषाम् उत्साहः आनन्दः च भवति । यान्त्रिकजीवने, कार्यानुकरणे, नावीन्याभावे च ते श्वासोच्छ्वासं कर्तुं कष्टम् अनुभवन्ति । तेषां चिन्तनं त्रिविक्रमचिन्तनं, चैतन्यं वैद्युतचैतन्यम् इति कारणतः समयाभावः

प्रतिक्षणधावनं च तेभ्यः तु सर्वसामान्यम् । सिषाधयिषवः क्षणमपि तूष्णीं स्थातुं न शक्नुयुः । ते क्रियाशीलाः अविश्रान्ताः च । ते स्वयंचालिताः, अग्रेसराः, साहसिनः, पुरोगामिमानसाः, वर्तमानं परित्यज्य अज्ञातं भविष्यं प्रवेष्टुं सज्जाः !

अल्बर्ट ऐन्स्टीन् उक्तवान् आसीत् - 'कस्यापि महतः जनस्य जीवने सः किं कुर्वन् अस्ति, कियत् कष्टम् अनुभूतवान् इत्येतद् मुख्यं न, अपि तु सः किं चिन्तयति, कथं चिन्तयति इति एतदेव तस्य विकासं निश्चिनोति' इति । हनुमान् स्वस्य शक्तिमत्त्वं यावत् स्वयं न जानाति स्म, तावत् सः सामान्यः इव व्यवहरति स्म । परं 'अहं शक्नोमि' इति यदा चिन्तयितुम् आरब्धवान् तदा न केवलं सागरम्, अपि तु आकाशं, लङ्कां, रावणसभां चेति सर्वमपि उल्लङ्घितवान् । बिल् गेट्स् इति 'मैक्रो सॉफ्ट'संस्थायाः संस्थापकाध्यक्षः (अद्य जगतः प्रथमक्रमाङ्कस्य धनिकः) बाल्ये विद्यालयतः निष्कासितः छात्रः आसीत् ! परं तस्य भिन्नप्रकारकस्य चिन्तनस्य कारणतः सः अद्य जगत् एव भिन्नप्रकारेण यथा कार्यं कुर्यात् तथा कारितवान् ।

अब्राहं लिङ्कन् कश्चन महान् सिषाधयिषुः आसीत् । तस्य २१तमे वयसि सः वाणिज्ये विफलः अभवत् । २२तमे वयसि शासकीयनिर्वाचने सः पराजितः । २६तमे वयसि तस्य प्रियपत्न्याः मरणं जातम् । ३४तमे, ३६तमे च वयसि काङ्ग्रेस्निर्वाचने सः पराजितः, ४५तमे वयसि सेनेट् निर्वाचने पराजितः, ४७तमे वयसि अमेरिकादेशस्य उपाध्यक्षपदाय जाते निर्वाचने पराजितः, ४९तमे वयसि पुनरपि सेनेट्निर्वाचने सः पराजितः, परम् अन्ते ५२तमे वयसि अमेरिकादेशस्य अध्यक्षीयनिर्वाचने न केवलं जयं प्राप्तवान्, अपि तु अमेरिकेतिहासे एव इतरैः अलभ्यं महोन्नतं स्थानं प्राप्तवान् । लिङ्कनाय प्रत्येकमपि वैफल्यं भविष्यतः सफलतायै सोपानम् आसीत् । निर्वाचनेषु पराजितस्य तस्य मनः अपराजितमेव आसीत् । अजिता सिषाधियिषा एव तम् अग्रे अनयत्, शिखरं प्रापयत् च ।

सिषाधयिषवः कार्यमध्येऽपि हसितुं शक्नुवन्ति, कार्ये आनन्दास्वादं कर्तुं च शक्नुवन्ति । ते कार्यं साधयिष्यामि इति कृतसङ्कल्पाः क्रियमाणप्रयत्नाः

च भवन्ति । परं वैफल्यानि अपि स्वीकर्तुं सज्जाः तिष्ठन्ति । विफलतासु सतीषु अन्यान् न दूषयन्ति, अपि तु स्वयम् उत्तरदायित्वं स्वीकुर्वन्ति, परं हताशाः अपि न भवन्ति । अत्यन्तम् उन्नतस्य वृक्षस्य महतः औन्नत्याद् अधः भूमौ वेगेन सशब्दं पतितः अपि वानरः यथा अस्थिभङ्ग-वेदना-रोदनादिकं विना अनुक्षणं ततः उत्थाय चलति, धावति, पुनरपि वृक्षारोहणस्य प्रारम्भं करोति तथा सिषाधयिषुः अपि विफलतायां महत्यामपि किमपि न जातमिव पुनरपि यत्नारम्भं करोति । कतिवारं सः यत्नान् कुर्यात् ? अन्तिमविफलतायाः अनन्तरम् एकवारमेव !

नेपोलियन् यानि युद्धानि कृतवान् तेषु ३३% युद्धेषु सः पराजयं प्राप्तवान् आसीत् । सिषाधयिषवः तादृशाः जनाः ये ९९९ वारं विफलाः भवेयुरपि तथापि ते वक्तुं शक्नुयुः यत् 'अहं ९९९ वारम् 'इलेक्ट्रिक् बल्ब् कथं न करणीयम् इति ज्ञातवान्' इति । (विद्युद्दीपः निर्मातुं शक्यः इति चिन्तयित्वा थामस् एडिसन् शताधिकवारं विफलप्रयोगं कृत्वा अन्ते सफलः जातः इत्येषः इतिहासः अस्माभिः ज्ञायते एव) बहूनां प्रयत्नानाम् अनन्तरमेव १८७९तमे वर्षे थामस् एडिसन्महोदयः 'जनरल् इलेक्ट्रिक्' इति संस्थाम् आरब्धवान् या संस्था अद्यपर्यन्तं फोनोग्राफ्, चलच्चित्रप्रदर्शनयन्त्रम् इत्यादीनां नानाविधानां १०,००० अधिकानाम् आविष्काराणां 'स्वामित्वम्' (पेटेण्ट्स्) प्राप्तवती अस्ति !

सिषाधयिषूणां न केवलं मस्तिष्कम्, अपि तु प्रत्येकम् अवयवः अपि कार्यं करोति । तेषां नेत्रे दृश्यम् अदृश्यं स्वल्पदृश्यं सर्वमपि पश्यतः । तेषां कर्णौ श्रव्यम् अश्रव्यम् उक्तम् अनुक्तं मधुरं कठोरं सर्वमपि शृणुतः । जिह्वा शब्दमपि करोति, मौनमपि जानाति, प्रसरति संकुचति च । नासिका तावत् भविष्यमपि आघ्रातुं शक्नोति । सिषाधयिषूणां कृते शरीरावयवानाम् आवश्यकतानाम् अपेक्षया लक्ष्यस्य आवश्यकताः एव प्रधानाः भवन्ति । स्वस्य आनुकूल्यं द्वितीयं चेत् कार्यस्य साफल्यं प्रथमं स्थानं स्वीकरोति ।

सिषाधयिषारहितजनाः सर्वमपि कार्यं सुखेन भवेत् इति चिन्तयन्ति । ते साहसचिन्तनं (risk taking) नाम किम् इत्येव न जानन्ति । किमपि कार्यं

भवति, न भवति चेदपि तेषु कोऽपि परिणामः न भवति । तेषां जीवने स्वेदः, कष्टसहिष्णुता, परिश्रमः इत्यादिशब्दानां किमपि स्थानं न भवति । प्रत्युत वैफल्यभयं, समस्यासम्भावना, अल्पतृप्तिः इत्यादयः तेषां जीवन-शकटस्य चालकस्थाने उपविष्टाः भवन्ति । असिषाधयिषवः अभावभाव-भरिताः, परिस्थितिचालिताः, वायुनेयाः सन्तः 'मम जीवने कश्चन चमत्कारः भवेत् येन अहं महान् भवेयम्' इति चमत्कारप्रतीक्षायां भवन्ति ! लवणरहितः पाकः सुगन्धहीना गन्धवर्तिका, छिन्नसम्पर्कः विद्युद्दीपः, बसस्थानकस्थः वृषभः, सिषाधयिषारहितजीवनम् इत्येतेषां मध्ये नास्ति कोऽपि महान् भेदः !

सिषाधयिषूणाम् 'उद्यानं ते पुरुष, नावयानम्' इत्याख्यः वेदमन्त्रः एव जीवनमन्त्रः । (भवता उपरि गन्तव्यम्, ऊर्ध्वमुखविकासः भवेत्, न तु अधोगतिः इति भावार्थः) उन्नतम् उदात्तं च किञ्चित् लक्ष्यं यदा जीवनस्य पुरतः भवति तदा तद् लक्ष्यं जीवनाय गतिशीलतां ददाति । सिषाधयिषुः अर्जुनः इव सर्वत्र लक्ष्यमेव पश्यति । यथा राधा कृष्णं पश्यति तथा ध्येयवादी सिषाधयिषुः कार्यकर्ता कार्ये, सम्पर्के, व्यक्तौ, प्रवासे, मेलने, कार्यक्रमे, भोजने, गृहे, बन्धुषु, मित्रतायां सर्वत्र ध्येयमेव पश्यति । एकया दृष्ट्या चिन्त्यमाने सिषाधयिषूणाम् उन्मत्तानां च मध्ये महत् अन्तरं किमपि नास्ति । एतावदेव अन्तरं यत् पूर्वतनः महतः ध्येयस्य कृते उन्मत्तः इति । सिषाधयिषायां सत्यां सः ध्येयपूर्त्यर्थं स्वस्मिन् अपेक्षितानि परिवर्तनानि, अपेक्षितान् गुणान् च सम्पादयति । यथा सूर्ये उदिते अन्धकारः अपगच्छति, प्रकाशः च व्याप्नोति तथैव संस्कृतशिक्षकेषु, संस्कृतच्छात्रेषु, संस्कृतानुरागिषु च सिषाधयिषायां समुदितायां संस्कृतस्य ग्रहणम् अपसरेत्, तुरीया वाक् जगदेव व्याप्नुयात् !



[सम्भाषणसन्देशः - मे, २००३]

# ११. संस्कृतवर्षे संस्कृतदिनम्

उपरितनस्यं शीर्षकस्य पठनेन 'कः एषः विरोधाभासः' इति भासते । यतः एतत् वर्षमेव संस्कृतवर्षम्, अर्थात् ३६५ दिनानि अपि संस्कृतदिनानि । एवं सति एकं दिनं संस्कृतदिनं कथम् ? इति । श्रावणपूर्णिमा-दिनं केन्द्रसर्वकारेण संस्कृतदिनत्वेन बहुभ्यः वर्षेभ्यः आचर्यमाणम् अस्ति । देशस्य केषुचित् भागेषु गीताजयन्तीदिनम् अपि संस्कृतदिनत्वेन आचर्यते । सः संस्कृतदिनकार्यक्रमः एतस्मिन् वर्षे अपि आचरिष्यते । सः एव विशेषः ।

संस्कृतवर्षं भवतु, संस्कृतदिनं वा भवतु, तत् किञ्चित् निमित्तमात्रम्, साङ्केतिकम् । तत् निमित्तं स्वीकृत्य अस्माभिः कार्यं साधनीयम् ।

गतसप्ताहे कश्चन युनिवार्तापत्रकारः दूरभाषां कृत्वा संस्कृतवर्षसम्बन्धे मां कतिचन प्रश्नान् पृष्टवान् –

''अद्यपर्यन्तं विविधभाषाणां दिनानि, सप्ताहः, पक्षः वा आचर्यन्ते स्म । परन्तु कदापि भाषायाः कस्याश्चिदपि वर्षं न आचरितम् । संस्कृतवर्षम् इति कथमिदं निश्चितम् ?'' इति ।

तदेव संस्कृतस्य महत्त्वम् । तदेव संस्कृतस्य सत्त्वम् ।

कश्चन इतिहासः आरब्धः अस्ति । यदि वयम् इच्छामः तर्हि तम् इतिहासं स्मरणीयं, सुन्दरं, नवोत्थानगर्भं च कर्तुं शक्नुयाम ।

गतयुगादिदिने (वर्षप्रतिपदा, मार्च १८) संस्कृतवर्षस्य आरम्भः जातः अस्ति । संस्कृतवर्षस्य शुभारम्भस्य उद्घोषः इतोऽपि अधिकस्थानेषु यदि अभविष्यत् तर्हि समीचीनतरम् अभविष्यत् । भवतु नाम । चिन्ता मास्तु । प्रकृतं चिन्तयाम ।

नागपुरे कश्चन कार्यक्रमं प्रति कश्चन वरिष्ठः केन्द्रीयमन्त्री आगतः आसीत् । प्रमुखैः सह वार्तालापं कुर्वता तेन उक्तं – ''संस्कृतवर्षे एतस्मिन्

जनजागरणाय, वातावरणनिर्माणाय च संस्कृतज्ञैः यः उत्साहः, या क्रियाशीलता च दर्शनीया आसीत् सा न दृश्यते'' इति ।

भगवति मम एका एव प्रार्थना यत् ''अग्रे कदापि केऽपि संस्कृतज्ञान् प्रति अङ्गुलिनिर्देशं कृत्वा भाषितुं यथा न शक्नुयुः तथा कार्यं कर्तुम् अस्मभ्यं संस्कृतच्छात्रेभ्यः संस्कृतज्ञेभ्यः संस्कृतानुरागिभ्यः च शक्तिं विवेकं च भगवान् ददातु'' इति ।

यदी संस्कृतवर्षस्य यशस्वितायै संस्कृतप्रचाराय च वयं शासनाभिमुखाः तिष्ठामः, सर्वकारतः अपेक्षाः कुर्वन्तः प्रतीक्षां कुर्मः, तर्हि अपेक्षितं परिणामं, प्रभावं च साधयितुं न शक्नुयाम । इदानीन्तनी आवश्यकता तावत् एकैकेन अपि संस्कृतच्छात्रेण, शिक्षकेण, प्राध्यापकेन, अनुरागिणा च स्वीयशक्त्यनुसारं कार्यक्रमाः स्वीकरणीयाः ।

सम्भाषणशिबिरं, सायङ्कालिकसंस्कृतकक्ष्याः, बालानां संस्कृतशिक्षण-कार्यक्रमाः, बालानां संस्कृतेन मनोरञ्जनात्मकाः सांस्कृतिककार्यक्रमाः, प्रचारपत्रकाणां भित्तिपत्राणां संश्लेषकाणां च महता प्रमाणेन मुद्रणं वितरणं च, पत्राचारमाध्यमेन संस्कृतशिक्षणयोजनायाः प्रचारः, 'सम्भाषणसन्देशः', 'भारती' - इत्यादीनां संस्कृतपत्रिकाणां ग्राहकसंख्यावृद्धिः, 'संस्कृतं वदतु' इति अल्पमूल्यस्य (रू. २/- केवलम्) पुस्तकस्य शतशः, सहस्रशः संख्यया विक्रयणम् - इत्येतादृशाः कार्यक्रमाः अस्माभिः अस्माकं बलेन अत्यधिकसंख्यया आयोजनीयाः ।

संस्कृतवर्षे तादृशं दृश्यं स्यात् यत् 'सर्वः अपि संस्कृतज्ञः संस्कृत-प्रचारकार्यतत्परः ! संस्कृतकार्यकर्तारः धावन्तः कार्यं कुर्वन्ति, अहोरात्रं कार्यं कुर्वन्ति, कार्यक्रमम् अनु कार्यक्रमम् आयोजयन्ति, पत्रिकासु वार्तापत्रेषु संस्कृतस्यैव वार्ताः, लेखाः वा । सर्वत्र सर्वदा च संस्कृतमेव श्रुतिपथं दृष्टिपथं च आयाति' इति ।

सद्यः एकः महान् अवसरः समागतः अस्ति । सः एव संस्कृतदिनम् । श्रावणपूर्णिमा एव (अगस्टमासस्य २६तमे दिनाङ्के) संस्कृतदिनम् । (गीताजयन्ती डिसेम्बर १९ दिनाङ्के) श्रावणमूर्णिमायाम्, तस्मिन् सप्ताहे वा

एकस्मिन् दिने संस्कृतदिनस्य आचरणं करणीयम् । देशे अत्यधिकस्थानेषु तन्निमित्तकाः कार्यक्रमाः भवेयुः । तदर्थम् अस्माभिः इदानीमेव सज्जताः आरब्धव्याः ।

कीदृशाः कार्यक्रमाः ? सभा, सम्मेलनं, सङ्गोष्ठी, नाटकं, नाटकोत्सवः, संस्कृतसम्भाषणोत्सवः, संस्कृतसङ्गमः, संस्कृतगृहसम्मेलनं, प्रदर्शिनी, शोभायात्रा, विविधाः प्रतियोगिताः/स्पर्धाः – (सम्भाषणस्पर्धा, कथाकथनं, विनोदकणिकाकथनं, निबन्धः, अन्त्याक्षरी, प्रश्नमञ्चः, रसप्रश्नः, गीतगानं, कण्ठपाठः, चर्चा – इत्यादिस्पर्धाः) व्याख्यानमाला – इत्येवं बहुविधाः कार्यक्रमाः भवितुमर्हन्ति ।

एकदिनात्मकः कार्यक्रमः, दिनद्वयस्य सप्ताहस्य वा कार्यक्रमः भवतु, विद्यालये कार्यक्रमः भवेत् । मन्दिरे विविधसंस्थानाम् आश्रये वा भवेत् । सामान्यानां दृष्ट्या यत्र संस्कृतसम्बन्धः नास्ति तादृशस्थलेषु अपि कार्यक्रमाः भवितुम् अर्हन्ति । संस्कृतेतरक्षेत्रे क्रियमाणैः कार्यक्रमैः अधिकः प्रचारः भवति । कुत्र कुत्र कार्यक्रमः कर्तुं शक्यते इति काचन सूची सज्जीकरणीया । तत्र स्थानस्य नाम, संयोजकस्य नाम च भवतु । कार्यक्रमनिमित्तं स्वागतसमितिः आयोजनसमितिः वा रच्यते चेत् साधु एव भवेत् ।

इदानीमेव तदर्थं कैश्चित् जनैः उपविश्य कार्यक्रमाः, कार्ययोजनाः च करणीयाः । कार्यक्रमः वैभवेन भवेत् । नगरस्य ग्रामस्य वा सर्वेषां जनानाम् उपरि यथा प्रभावः भवेत् तथा कार्यक्रमाः आयोजनीयाः । तादृशकार्यक्रमार्थम् अध्यक्ष-अभ्यागत-अतिथिरूपेण समाजप्रमुखाः, नेतारः, गण्याः च आह्वातव्याः । प्रचारपत्रकाणि भित्तिपत्राणि च मुद्रयितुं शक्यन्ते । ग्रामप्रदेशे तु मुखतः प्रचारः करणीयः । कार्यक्रमस्य पूर्वभाविरूपेण स्पर्धादीनाम् आयोजनेन संस्कृतमयं वातावरणं निर्मितं भवेत् ।

तस्मिन् सप्ताहे पत्रपत्रिकासु संस्कृतविषये लेखनानां प्रकाशनाय इदानीमेव लेखनानि सज्जीकरणीयानि, सम्पादकैः सह मेलनं करणीयं च । कार्यक्रमस्य वार्ता तु पत्रपत्रिकासु यथा प्रकाशिताः भवेयुः तथा प्रयत्नाः करणीयाः एव ।

सर्वेषु मुद्रणेषु, लेखनेषु, वस्त्रफलकेषु च 'सम्भाषणसन्देश'स्य एतस्य मासस्य मुखपुटे सर्वकारेण स्वीकृतं यत् संस्कृतवर्षस्य बोधचिह्नं प्रकाशितम् अस्ति तद् अस्माभिः मुद्रयितुं शक्यते ।

समाजस्य महान् भागः संस्कृताभिमानी अस्ति । गण्येषु महाजनेषु, प्राशासनिकेषु अधिकारिषु च बहवः संस्कृतानुरागिणः सन्ति । अस्माभिः तेषां सम्पर्कः करणीयः । संस्कृतदिनस्य आचरणे तेषां महयोगः स्वीकरणीयः । मठमन्दिराणां च सहयोगः प्राप्तव्यः ।

संस्कृतवर्षे देशे संस्कृतवातावरणनिर्माणम् अस्माकं संस्कृतज्ञानामेव कर्तव्यम् । संस्कृतज्ञानां सङ्घटनं संस्कृतज्ञैः एव कर्तव्यम् । यदि संस्कृत-कार्यक्रमाणाम् आयोजनं संस्कृतज्ञैः क्रियते तर्हि अन्ये सहयोगं कुर्युः । वयं संस्कृतज्ञाः यदि जनानां समीपं गच्छेम तर्हि जनाः अस्मत्समीपम् आगच्छेयुः । अतः संयोजनकार्यं संस्कृतज्ञानामेव ।



[सम्भाषणसन्देशः - जुलै, १९९९]

# १२. उदिता संस्कृतभारती

पञ्चदशवर्षेभ्यः पूर्वं १९८१ तमे वर्षे जून्मासे बेङ्गलूरुनगरे हिन्दु-सेवाप्रतिष्ठानस्य संस्कृतविभागमाध्यमेन संस्कृतसम्भाषणान्दोलनस्य आरम्भः अभवत् । संस्कृतभाषां व्यवहारभाषां कृत्वा तन्माध्यमेन सामाजिक-परिवर्तनम् आनेतव्यम् इति उद्देशेन प्रचाल्यमानम् एतद् आन्दोलनं बह्वीनां व्यक्तीनां संस्थानां च प्रयत्नेन अद्य देशस्य सर्वेषु अपि राज्येषु व्याप्नुवत् अस्ति ।

सम्भाषणान्दोलनस्य आरम्भदिने एव ज्येष्ठैः अंशचतुष्टयं निर्दिष्टम् आसीत् । तत्र 'संस्कृतभाषायाः गुणगानकरणेनैव संस्कृतस्य सेवा समाप्ता न भवेत् । सर्वेण अपि संस्कृतस्य विषये भाषणं न, संस्कृतेन सम्भाषणं कर्तव्यम् । सरलसंस्कृतं पाठनीयम्, संस्कृतेन पाठनीयं, संस्कृतसम्भाषणं शिक्षणीयं च । तदर्थं व्यापकरूपेण संस्कृतसम्भाषणशिबिराणाम् आयोजनं करणीयम् । शिबिराणां द्वारा देशे प्रतिनगरं प्रतिग्रामं ध्येयवादिनां, समर्पितचित्तानां, समयदातॄणां, संस्कृतार्थमेव जीवतां कार्यकर्तॄणां गणनिर्माणं करणीयम्' इति प्रथमः अंशः ।

'संस्कृतभारत्याः प्रचारः भाषार्थं केवलं न । भाषा तु साधनं, साध्यं न । संस्कृतभाषा समाजे अद्य दृश्यमानानां जाति-मत-प्रान्तेत्यादिसर्वविधानां भेदभावनानां निवारणाय, भावैक्यनिर्माणाय, राष्ट्रियस्वाभिमाननिर्माणाय, समाजस्य गुणात्मकपरिवर्तनाय, जीवनस्य सर्वक्षेत्राणां विकासाय च एकं साधनं भवेत् । तदनुगुणं कार्यक्रमाः रचनीयाः' इति द्वितीयः अंशः ।

'संस्कृतकार्यम् एकं जनान्दोलनं भवेत् । 'संस्कृतार्थं कार्यं कुर्वाणाः सर्वाः व्यक्तयः, सर्वाः संस्थाः च अस्मदीयाः' इति भावना कार्यकर्तृषु सर्वदा भवेत् । सर्वेषु अपि आत्मीयता भवेत् । व्यक्तिगतान्, संस्थागतान् च अभिनिवेशान् विना सर्वे सम्भूय कार्यं कुर्युः । तदर्थं सर्वः कार्यकर्ता उदारः भवेत्' इति तृतीयः अंशः ।

'संस्कृतकार्यं स्वतन्त्रं स्वावलम्बि च भवेत् । संस्कृतज्ञाः संस्कृतप्रचाराय शासनाभिमुखाः, परमुखप्रेक्षिणः वा न भवेयुः । कार्यसाधनार्थम् अपेक्षितानां कार्यकर्तृणां निर्माणं, धनस्य अन्यसाधनानां वा सङ्ग्रहः - एतादृशं सर्वं संस्कृतक्षेत्रे स्वयमेव साधनीयम्' इति चतुर्थः अंशः ।

एतेषां चतुर्णां मार्गदर्शकसूत्राणां कारणतः आरम्भतः अपि संस्कृत-कार्यकर्तृणां पुरतः लक्ष्यं स्पष्टम् आसीत्, कार्यशैली च लक्ष्यसाधिका आसीत् । अतः एव अद्य संस्कृतान्दोलनं बृहदाकारेण वर्धमानम् अस्ति । संस्कृतकार्यस्य वर्धने भारतसंस्कृतपरिषद्, विद्याभारतीसंस्कृतविभागः, विश्वसंस्कृतप्रतिष्ठानं (केरलम्), स्वाध्यायमण्डलम् (पारडी) इत्यादीनां संस्थानां योगदानम् अतीव महत्त्वपूर्णम् अस्ति ।

अद्य संस्कृतकार्यस्य व्याप्तेः वैशाल्यात् च मुख्यतया त्रिभिः कारणैः एकस्य केन्द्रभूतस्य संस्थानस्य आवश्यकता अनुभूता । प्रथमं तावद् शताधिकाः स्वयंसेविसंस्थाः इदानीमेव संस्कृतप्रचारकार्ये व्याप्ताः, सहस्राधिकाः स्थानीयाः, प्रान्तीयाः, राष्ट्रियाः वा संस्थाः संस्कृतकार्योत्सुकाः च सन्ति । एतासां सर्वासां कार्येषु परस्परं सहयोगाय संयोजिका काचित् संस्था आवश्यकी इति ।

द्वितीयं तावद् संस्कृतकार्यप्रगत्यै सर्वासां संस्थानां कृते पूर्णावधि-कार्यकर्तृणाम् आवश्यकता भवति, अन्यकार्यकर्तृणां, शिक्षकाणां च प्रशिक्षणं करणीयं भवति । भाषाशिक्षणे शास्त्रशिक्षणे कार्यसम्बन्धे विविधविषयेषु च शोधस्य आवश्यकता अस्ति । अन्यसाधनानाम् आपूर्तिः कर्तव्या भवति । एतेषु विषयेषु सर्वासां संस्कृतसम्बन्धिसंस्थानां यथाशक्ति साहाय्यं करणीयम् इति ।

तृतीयं तावद् यद्यपि संस्कृतसम्भाषणसम्बन्धिकार्यक्रमाः एतस्य आन्दोलनस्य आधारभूताः सन्ति, तथापि आगामिनि काले संस्कृतस्य राष्ट्रस्य च सर्वतोमुखविकासाय - संस्कृतशिक्षाक्षेत्रे परिवर्तनम्, लोकानां संस्कृत-शिक्षणम्, पठन-पाठन-साहित्य-निर्माणम्, शिक्षकप्रशिक्षणम्, संस्कृतेन समकालिक-नव-साहित्यनिर्माणम्, शास्त्रसंरक्षणम्, वेदशिक्षणं शोधश्च, ताडग्रन्थानां सङ्ग्रहः प्रकाशनं च, संस्कृत-विज्ञान-अनुसन्धानम् - इत्येवं-प्रकारेण बहुमुखिकार्याणि स्वीकरणीयानि, महता प्रमाणेन च करणीयानि । तस्य करणीयस्य कार्यस्य अगाधतां, विद्यमानस्य समयस्य सीमिततां च मनसि निधाय भविष्यतः सृष्ट्यर्थं समग्रं चिन्तनं कर्तुं मातृस्थानीया काचित् केन्द्रीयसंस्था चिन्तिता ।

संस्कृतान्दोलनानुभवजन्या, बहुकालतः निरीक्षिता च सा 'संस्कृतभारती' यद्यपि गतवर्षे एव घटिता, न्यासरूपेण तस्याः पञ्जीकरणं तु त्रिभ्यः मासेभ्यः पूर्वं देहलीनगरे सम्पन्नम् । न्यासपत्रं संस्कृतेन एव लिखितं, संस्कृतेन एव तस्य पञ्जीकरणं कृतम् इति एतदेकं वैशिष्ट्यम्, इतिहासे प्रथमं च । मान्यः श्री मोरोपन्तपिङ्गले (नागपुरम्), श्री कृ. सूर्यनारायणरावः (मद्रास्), श्री अशोकसिंहलः (देहली), श्री लज्जाराम तेमरः (लखनऊ), श्री न. कृष्णप्पः (बेङ्गलूरु), श्री यस्. गुरुमूर्तिः (मद्रास्) श्री जी. पुल्लारेड्डी (हैदराबाद), श्री डाह्या भाई शास्त्री (कर्णावती), श्री जयनारायण खण्डेलवालः (देहली), श्री जयप्रकाश अग्रवालः (देहली), चमू कृष्ण शास्त्री (देहली) - एते संस्कृतभारत्याः न्यासिनः सन्ति । मार्च्मासे लखनऊनगरे सञ्जातायां न्यासिनां प्रथमगोष्ठ्यां श्री कृ. सूर्यनारायणरावः न्यासिमण्डल्याः अध्यक्षरूपेण, चमू कृष्ण शास्त्री मन्त्रिरूपेण, श्री जयनारायण खण्डेलवालः कोषाध्यक्षरूपेण च चिताः । देशे संस्कृतार्थं याः याः संस्थाः कार्यं कुर्वत्यः सन्ति ताः सर्वाः अपि संस्कृतभारत्याः सम्बद्धतां स्वीकर्तुम् अर्हन्ति । संस्कृतभारती सर्वासां संस्थानां कार्येषु साहाय्यं कुर्वती, पोषिका सती स्वयमपि समग्रे देशे बहून् कार्यक्रमान् स्वीकुर्यात् ।

संस्कृतभारत्याः केन्द्रीयकार्यालयः देहल्यां भवति । तस्य पत्रसङ्केतः तु

- संस्कृतभारती,
मातामन्दिरगली, झण्डेवाला
नई दिल्ली - ११० ०५५

हिन्दुसेवाप्रतिष्ठनस्य बाबासाहेब-आप्टेस्मारकसमित्याः च स्वीयानि संस्कृतेतरकार्याणि बहूनि सन्ति । संस्कृतकार्यमपि तयोः संस्थाने अन्यतमं कार्यम् आसीत् । परन्तु इदानीं संस्कृतभारत्याः बलवर्धनं करणीयमिति कारणतः द्वाभ्यामपि निश्चितं यत् स्वीयः संस्कृतविभागः इतःपरं संस्कृतभारत्या सह संयुक्तः भवतु इति । अतः इतःपरं हिन्दुसेवाप्रतिष्ठनस्य संस्कृतविभागः न भवष्यति । सः विभागः संस्कृतभारत्या सह संयुक्तः अस्ति । तस्य कार्यक्रमाः तु पूर्ववत् एव प्रचलिष्यन्ति । परं संस्कृतभारतीनाम्ना ।

निर्दिष्टं लक्ष्यं कालं च निश्चित्य तदनुगुणं योजनाबद्धं कार्यं करणीयम् इति विचिन्त्य द्विनवतितमे वर्षे (१९९२) संस्कृतकार्यकर्तृभिः काचित् कार्ययोजना कृता आसीत् । तदनुसारं 'आगामि २०००तमं वर्षं 'संस्कृतवर्षम्' इति आचरणीयम्' इति निश्चितमपि आसीत् । इदानीं सर्वासां संस्थानां प्रान्तानां च प्रातिनिध्यं यथा स्यात् तथा अखिलभारतस्तरे एकां चिन्तनगोष्ठीं कृत्वा तत्र कार्ययोजनायाः विषये विस्तरेण समग्रतया च पुनश्चर्चा कर्तव्या अस्ति । तादृशी एका गोष्ठी आगामिजुलाईमासे नवमदशमदिनाङ्कयोः (९.७.१९९६, १०.७.१९९६) भोपालनगरे भविष्यति । तत्र अग्रिमकार्यक्रमाणां निर्णयः भविष्यति ।

संस्कृतसञ्जीवनीयोजनानुसारं पूर्णावधिकार्यकर्तॄणां प्रशिक्षणं, कार्ये तेषां योजनं च एतस्मिन् वर्षे अपि अगस्ट्मासे भविष्यति । प्रकृतं देशे संस्कृतकार्यार्थमेव १०६ पूर्णावधिकार्यकर्तारः सन्ति । मई–जून्मासयोः दशसु स्थानेषु विविधसंस्थानां माध्यमेन संस्कृत-आचार्याणां प्रशिक्षण-शिबिराणि प्राचलन् ।

अद्य सर्वत्र संस्कृतस्य महत् प्रोत्साहनं दृश्यते । संस्कृतज्ञेभ्यः कार्यकर्तृभ्यः अस्मत् समाजः बहु निरीक्षते । एतादृशे विशिष्टे सन्निवेशे कवेः श्रीमतः जनार्दनहेगडेमहोदयस्य कस्यचित् गीतस्य अधस्तनपङ्क्तयः पुनः पुनः मनसि

गुञ्जन्ति -

''कृत्वा नवदृढसङ्कल्पम्
वितरन्तो नवसन्देशम् ।
घटयामो नवसङ्घटनम्
रचयामो नवमितिहासम् ।।''



[सम्भाषणसन्देशः - जून्, १९९६]

# १३. एवं भवतु संस्कृतसप्ताहः

'श्रावणपूर्णिमायाः पूर्वं त्रीणि दिनानि, पश्चात् त्रीणि दिनानि च संयोज्य संस्कृतसप्ताहः आचरणीयः' इत्येषः निर्णयः केन्द्रशासनेन गतवर्षे घोषितः आसीत् इति वयं स्मरामः एव । अस्मिन्नपि वर्षे तद्विषये केन्द्रशासनेन सर्वेषां राज्यानां शिक्षणविभागस्य कार्यदर्शिभ्यः विश्वविद्यालयानां संस्कृत-विभागेभ्यश्च सूचनापत्रं प्रेषितम् अस्ति । (No. F-11-2/2001skt.II.Dated 3.7.2002) तत्र केन्द्रशासनस्य शिक्षणविभागस्य कार्यदर्शी संस्कृतसप्ताहम् आचरितुं सर्वान् अपि निवेदितवान् अस्ति ।

अस्माभिः संस्कृतज्ञैः संस्कृतकार्यकर्तृभिश्च अवसरमेनम् सदुपयुक्तं कुर्वद्भिः संस्कृतस्य प्रसाराय नैकविधाः कार्यक्रमाः चिन्तनीयाः । अस्मिन् वर्षे अगस्ट्मासस्य २२तमे दिनाङ्के श्रावणपूर्णिमा भविष्यति । तन्नाम १९.८.२००२ तः २५.८.२००२पर्यन्तं सप्ताहं यावत् संस्कृतसप्ताहस्य आचरणं करणीयम् । कार्यकर्तृभिः अस्माभिः तदवसरे एतादृशाः केचन कार्यक्रमाः आयोजयितुं शक्यन्ते -

प्रतिनगरं धार्मिक-शैक्षणिक-सांस्कृतिकसंस्थाः भवन्ति । तासां सम्पर्कं कृत्वा तत्सहयोगेन सार्वजनिकः कार्यक्रमः आयोजनीयः, यत्र गृहीतभागाः जनाः संस्कृतस्य महत्त्वम् आवश्यकतां च जानीयुः । तादृशीषु संस्थासु एका एकस्मिन् दिने कार्यक्रमम् आयोजयेत् । एवं सप्त संस्थाः मिलित्वा सप्त कार्यक्रमान् आयोजयेयुः, येन 'संस्कृतसप्ताहः' सुखेन निर्वर्तितः भवति । (यदि एका एव संस्था सप्त कार्यक्रमान् अपि आयोजयितुं शक्नोति तर्हि तदपि सुष्ठु एव ।) कार्यक्रमः नगरस्य विभिन्नेषु भागेषु आयोजितः भवति चेत् बहवः जनाः तत्र भागं ग्रहीतुं शक्नुवन्ति ।

'संस्कृतं विज्ञानं च' - इत्येषः इदानीं बहूनां जनानाम् आकर्षकः विषयः । संस्कृतभारत्या प्रकाशितेभ्यः 'संस्कृत में विज्ञान', 'प्राचीनभारतस्य वैज्ञानिक-परम्परा', आंग्लभाषया लिखितानि अन्यानि पुस्तकानि - इत्यादिभ्यः पुस्तकेभ्यः

तत्सदृशेभ्यः अन्यग्रन्थेभ्यश्च विषयसङ्ग्रहं कृत्वा वाग्मिनः विज्ञानाध्यापकाः संस्कृताध्यापकाः वा भाषणं सज्जीकृत्य जनानां पुरतः प्रस्तोतुं शक्नुवन्ति । तेषां पुस्तकानां प्रदर्शनमपि तत्र कर्तुं शक्यम् ।

संस्कृतसप्ताहावसरे जनानां मध्ये संस्कृतं वार्ताविषयः यथा भवेत् तथा करणीयम् । तदर्थं तेषु दिनेषु सर्वासु पत्रिकासु संस्कृतविषयकाः लेखाः यथा प्रकाशिताः भवेयुः तथा यत्नः करणीयः । स्वस्थाने ये उत्तमाः लेखकाः प्रतिष्ठिताः पत्रकाराः वा सन्ति, तेभ्यः इदानीमेव अपेक्षितं साहित्यं दत्त्वा लेखान् लेखितुं निवेदनं करणीयम् । लघ्वीषु अपि स्थानीयपत्रिकासु संस्कृतविषये बहवः लेखाः यदि प्रकाशिताः भवन्ति तर्हि तस्यापि महान् लाभः भवेत् एव ।

तत्र तत्र दूरदर्शनवाहिनीषु संस्कृतकार्यक्रमस्य प्रसारणं कर्तुं केचन सज्जाः भवन्ति । अतः तादृशाः सर्वेऽपि तद्विषये निवेदनीयाः ।

कार्यकर्तृगणः यत्र अस्ति तत्र ते गणीयाः सर्वे मिलित्वा तस्मिन् सप्ताहे प्रतिदिनं जनसम्पर्काभियानं कर्तुम् अर्हन्ति । तत्र पत्राचारमाध्यमेन संस्कृत-शिक्षणयोजनायाः 'सम्भाषणसन्देश'पत्रिकायाः, अन्यपत्रिकायाः वा, सरल-सम्भाषणोपयोगिनां पुस्तकानां चापि व्यापकः प्रचारः कर्तुं शक्यते । 'वीथीनाटकगणः' कश्चित् सज्जीकृतः चेत् सः प्रतिदिनम् एकैकं स्थानं चेति सप्ताहाभ्यन्तरे सप्तसु स्थानेषु वीथीनाटकम् अभिनीय तद्द्वारा संस्कृतस्य व्यावहारिकं मुखं जनेभ्यः परिचाययितुम् अर्हति ।

विद्यालयेषु छात्राणां निमित्तं विविधाः स्पर्धाः प्रतियोगिताः वा आयोजयितुं शक्याः । सर्वेषु संस्कृतविद्यालयेषु, पाठशालासु, गतवर्षे आरब्धेषु सर्वेषु सम्भाषणकेन्द्रेषु च कार्यक्रमस्य आयोजनम् अवश्यं करणीयम् । विदुषां मेलनं, संस्कृते नाटकानां मञ्चनम्, परिचर्चा, संवादगोष्ठी, संस्कृतगानगोष्ठी, सरलसम्भाषणप्रदर्शनं, प्रदर्शिनी, संस्कृतप्रवासः - इत्यादयः अन्येऽपि बहवः कार्यक्रमाः आयोजयितुं शक्यन्ते ।

गतवर्षापेक्षया अत्यधिकस्थानेषु अधिकवैभवेन संस्कृतसप्ताहः आचरितः यथा भवेत् तथा सर्वेऽपि वयं कार्यकर्तारः यत्नं करिष्यामः ।

[सम्भाषणसन्देशः - अगस्त, २००२] 

# १४. संस्कृतवर्षम् - देवदत्तः अवसरः

अग्रिमं वर्षम् अर्थात् आगामिवर्षप्रतिपदा(युगादि)-तः आरप्स्यमानं वर्षं (ई.स.-१९९९-२०००तमं वर्षम्) युगाब्दः ५१०१ - संस्कृतवर्षरूपेण आचरणीयम् इति केन्द्रसर्वकारस्य मानव-संसाधन-विकास-मन्त्रालयस्य सेण्ट्रल्संस्कृतबोर्ड् इत्यनेन निर्णीतम् अस्ति । संस्कृतस्य विषये जनजागरणं भवेत्, देशस्य कोणे कोणे अपि संस्कृतस्य आवश्यकतायाः विचारसन्देशः गच्छेत् इति आशयेन संस्कृतवर्षम् आचर्यते । केवलम् एकं वर्षं संस्कृतवर्षं न, अग्रिमा शताब्दी संस्कृतशताब्दी भवेत् । तस्याः शताब्द्याः प्रवेशः संस्कृतवर्षद्वारा भवति ।

१९९७तमे वर्षे जनवरिमासे बेङ्गलूरुनगरे सञ्जाते दशमे विश्वसंस्कृत-सम्मेलने, तस्मिन् एव वर्षे कलिकत्तायां जाते ३८तमे अखिल-भारत-प्राच्यविद्या-सम्मेलने च संस्कृतवर्षप्रस्तावः पारितः आसीत् । पश्चात् विद्या-भारती, अखिल-भारतीय-शिक्षा-संस्थानम् इत्यादिभिः संस्थाभिः अपि संस्कृतवर्षस्य समर्थनं कृत्वा तेषाम् अखिलभारतप्रतिनिधिसभासु प्रस्तावाः पारिताः आसन् । एवं सर्वकारेण समाजेन च स्वीकृतः एषः कार्यक्रमः - संस्कृतवर्षस्य आचरणम् इति ।

वस्तुतः अस्माकं परम्पराद्वयं - ज्ञानस्य, क्रियाशीलतायाः च इति । 'यस्तु क्रियावान् पुरुषः सः विद्वान्' इति सूक्तिः । परं 'वयं ज्ञानपरम्परां केवलं रक्षितवन्तः, क्रियाशीलतां न' इति संस्कृतज्ञानाम् अस्माकम् उपरि कश्चन आक्षेपः अस्ति । 'संस्कृतप्रचारः कथं करणीयः इति विषये भवन्तः भाषणकाराः, न तु कार्यकर्तारः' इत्यपि केचन आक्षिपन्ति । यदि वयं संस्कृतार्थं किञ्चित् कार्यं कर्तुम् इच्छामः तर्हि संस्कृतवर्षकार्यक्रमः एकः सदवकाशः । संस्कृतप्रचाराय भगवता प्रदत्तः एषः महान् अवसरः ।

संस्कृतवर्षयोजनां सफलां कर्तुं त्रिविधाः प्रयत्नाः भवेयुः - सर्वासां संस्थानां संयुक्तप्रयत्नेन, एकैकसंस्थामाध्यमेन, एकैकव्यक्तिद्वारा च इति । स्थानीयस्तरे, जिलास्तरे, प्रान्तीयस्तरे च सामाजिकसंघटनानि संस्थाः वा भवन्ति । सांस्कृतिकसंस्थाः, शैक्षिकसंस्थाः, धार्मिकमठमन्दिराणि च भवन्ति । एतेषां सर्वेषां समन्वयेन संस्कृतवर्षसमायोजनसमितीनां रचनां कृत्वा तदाश्रये कांश्चित् कार्यक्रमान् कर्तुं शक्नुमः । पुनः प्रत्येकम् अपि संस्था संघटनं वा स्वसंस्थामाध्यमेन कतिचन कार्यक्रमान् कुर्यात् । तथा च प्रत्येकमपि संस्कृतज्ञः संस्कृतानुरागी वा स्वप्रयत्नेन, स्वस्य छात्र-मित्र-परिचितादीनां द्वारा कतिचन कार्याणि साधयेत् ।

अस्माभिः द्विधा कार्यक्रमाः चिन्तनीयाः - प्रचारात्मकाः शिक्षणात्मकाः चेति । प्रचारात्मककार्यक्रमैः जनानां संस्कृते रुचिः उत्पद्येत, ते संस्कृतस्य आवश्यकताम् अवगच्छेयुः, समाजे संस्कृतानुकूलमानसिकता निर्मिता भवेत्, उत्साहनिर्माणं च भवेत् ।

एतेन समाजे संस्कृतस्य प्रभावनिर्माणं भवति. परन्तु शक्तिनिर्माणं न भवति । शिक्षणात्मकैः कार्यक्रमैः शक्तिः वर्धते । अतः संस्कृतवर्षे अत्यधिकप्रमाणेन सम्भाषणशिबिराणि चालनीयानि । सर्वा अपि संस्कृतज्ञा महिला स्वगृहसमीपस्थान् बालान् प्रतिदिनं पर्यायदिनेषु वा सायं मेलयित्वा 'संस्कृतबालकेन्द्रं' चालयितुं शक्नोति, यत्र क्रीडाः, गीतानि, सुभाषितानि इत्यादिभिः सह सरलसंस्कृतवाक्यानि सम्भाषणं वा पाठयितुम् अर्हति । देशे विभिन्नसंस्थाभिः सरलसंस्कृतपरीक्षाः सञ्चाल्यन्ते । तासां परीक्षाणां केन्द्रं स्वक्षेत्रे स्वीकृत्य सरलसंस्कृतपरीक्षार्थं शिक्षणकेन्द्रम् आरब्धुं शक्यते । अस्माकं क्षेत्रे विद्यमानानां विभिन्नसंस्थानां प्रमुखाः प्रार्थनीयाः यत् 'संस्कृतवर्षम् उपलक्ष्य स्वसंस्थामाध्यमेन सन्ध्याकालिकसंस्कृतकक्ष्याणाम् आरम्भं कुर्वन्तु' इति । तत्र तत्र द्वित्रदिनात्मकाः भाषाबोधनवर्गाः चालयितुं शक्यन्ते । संस्कृतशिक्षकाणां प्रशिक्षणवर्गाः, संस्कृतच्छात्राणां प्रशिक्षण-वर्गाः इत्येवंप्रकारेण भाषाशिक्षण-प्रशिक्षण-कार्यक्रमाः बहवः भवेयुः ।

प्रचारात्मकाः कार्यक्रमाः कार्यकर्तॄणां कल्पकतानुगुणम् अनन्ताः

भवितुम् अर्हन्ति ।

सर्वत्र दिनपत्रिकाः, साप्ताहिकी, पाक्षिकी, मासिकी, चेति बह्व्यः पत्रिकाः प्रादेशिकभाषाभिः प्रकाशिताः भवन्ति । ताः च स्थानीयस्तरे, जिल्लास्तरे, प्रान्तीयस्तरे च भवन्ति । एताः सर्वाः अपि सामान्यतः संस्कृतानुकूलाः एव । वर्षप्रतिपदा(युगादि)समनन्तरमेव ताः सर्वाः अपि पत्रिकाः संस्कृतविशेषाङ्कस्य संस्कृतवर्षविशेषाङ्कस्य वा प्रकाशनं यथा कुर्युः तथा अस्माभिः प्रयत्नः करणीयः । (दशमविश्वसंस्कृतसम्मेलनावसरे भारतीयविद्याभवनस्य Bhavan's Journal पत्रिकया संस्कृतविशेषाङ्कः प्रकाशितः आसीत् ।) तत्र संस्कृतभाषायाः महत्त्वम्, संस्कृतवाङ्मयस्य परिचयः, संस्कृतं विज्ञानं च, संस्कृतभाषायाः शब्दनिर्माणसामर्थ्यम्, इस्रेल्देशे हिब्रूभाषायाः पुनरुज्जीवनम्, सम्भाषणस्य महत्त्वम्, संस्कृतशिक्षणे अपेक्षितं परिवर्तनम्, संस्कृतभारत्याः परिचयः, सम्भाषण-आन्दोलनस्य अनुभवाः, संस्कृतगृहादिविविधप्रकल्पाः, संस्कृतविषये अन्यान्यजनानाम् उक्तयः, संस्कृतस्य प्रचारोपायाः इत्यादीन् विषयान् अधिकृत्य लिखिताः लेखाः भवेयुः ।

प्रादेशिकभाषया लेखान् सज्जीकृत्य अस्माभिः तत्तत्पत्रिकासम्पादकेभ्यः दातव्याः । सम्भाषणसन्देशे मया इतः पूर्वं लिखितान् (वर्तमानलेखं, भविष्यत्काले लेखिष्यमाणान् चापि) लेखान्, विज्ञान-तन्त्रज्ञान-सम्बन्धे प्रकाशितान् विविधलेखान् च प्रादेशिकभाषया अनूद्य पत्रिकाभ्यः प्रकाशनाय दातुं शक्नुवन्ति भवन्तः । कदाचित् ते विशेषाङ्कमेव न प्रकाशयेयुः चेदपि संस्कृतसम्बन्धिलेखान् तु ते प्रकाशयेयुः एव । लघुपत्रिकाः तु अवश्यमेव प्रकाशयन्ति । तासामपि महती शक्तिः भवति । अस्माभिः समूहमाध्यमस्य (mass-media) पूर्णः उपयोगः करणीयः ।

संस्कृतसम्भाषणानां, व्यवहारवाक्यानां, कथानां, विनोदकणिकानां, वार्तानां वा संस्कृतस्तम्भः प्रादेशिकभाषापत्रिकासु यथा भवेत् तथा प्रयत्नः कर्तुं शक्यते ।

इदानीं तु प्रतिनगरं केबल् टि.वि. भवति । तस्य द्वारा वार्ताप्रसाराय

अस्माभिः प्रयतनीयम् । (गते मासे आन्ध्रप्रदेशे कोव्वूरु इत्यत्र शिक्षक-प्रशिक्षणवर्गः प्रवृत्तः । तदवसरे तु प्रतिदिनं घण्टाद्वयस्य सम्भाषणशिबिरं रात्रौ पुनः घण्टाद्वयं यावत् केबल् टि.वि.द्वारा नगरे सर्वत्र प्रदर्श्यते स्म !) प्रत्येकम् आकाशवाणीकेन्द्रेण मासत्रये एकवारं संस्कृतकार्यक्रमः अनिवार्यतया प्रसारणीयः इति देहलीतः आकाशवाणीमहानिदेशकेन निर्देशः कृतः अस्ति । अतः स्थानीयस्य आकाशवाणीकेन्द्रस्य सम्पर्कः क्रियते चेत् तत्र अवसरः लभ्येत । तत्र बालानां संस्कृतकार्यक्रमाः आकर्षकाः भवेयुः ।

जनाः संस्कृतवर्षविषये युगाब्दविषये वा न जानन्ति । 'युगाब्दः ५१०१ (ई.सन्.-१९९९-२०००) - संस्कृतवर्षम्' इति विषयस्य संश्लेषकं (Sticker) कारयित्वा वितरणं करणीयम् । संश्लेषके प्रायोजकस्य नाम अपि मुद्रयितुं शक्यते । एवमेव प्रायोजकान् प्राप्य पत्रकाणि (Pamphlets), भित्तिपत्राणि (Posters) च मुद्रयित्वा वितरणीयानि ।

एतस्मिन् लेखे उपरि उक्ताः उपायाः, अग्रे उच्यमानाः उपायाः च यथा क्रियारूपतां प्राप्नुयुः तथा एकैकेन अपि प्रयत्नः कर्तव्यः । केन्द्रतः सूचनायाः प्रतीक्षाम् अकृत्वा स्थाने स्थाने अनुक्षणमेव कार्याणाम् आरम्भः करणीयः । स्वप्रयत्नेन, स्वपरिचितानां द्वारा एव वा बहुविधं प्रचारकार्यं कर्तुं, कारयितुं च शक्नुवन्ति भवन्तः !

ये केऽपि यत्किमपि निमन्त्रणपत्रं मुद्रयन्ति चेत् तद् संस्कृतेन मुद्रयतु इति प्रार्थनीयम् । तद् न शक्यं चेत् पत्रे अधः 'युगाब्दः ५१०१ (ई.स. १९९९-२०००) - संस्कृतवर्षम्' इति मुद्रयतु इति ते प्रार्थनीयाः । अथवा निमन्त्रणपत्रस्य पृष्ठभागे कतिचन संस्कृतव्यवहारवाक्यानि वा मुद्रयन्तु ते ।

प्रतिनगरं संस्कृतवीथीनाटकस्य अभिनेतॄणाम् एकः गणः रचनीयः । सः गणः प्रतिसप्ताहं विभिन्नस्थानेषु वीथीनाटकस्य अभिनयं कुर्यात् । तथैव वीथीभाषणानि (corner meetings) अपि करणीयानि ।

'संस्कृत वदतु' इति एकं लघु पुस्तकं संस्कृतभारत्या प्रकाशितम् अस्ति, यस्मिन् त्रिशताधिकसंस्कृतव्यवहारवाक्यानि अर्थसहितं मुद्रितानि सन्ति ।

तस्य मूल्यं केवलं रूप्यकद्वयम् । (अद्यत्वे चषकपरिमितस्य चायस्य अपि मूल्यं रूप्यकत्रयं भवति !) तदेकं पुस्तकं विक्रीतं भवति इत्युक्ते एकस्मिन् गृहे व्यावहारिकसंस्कृतस्य प्रवेशः जातः इत्यर्थः । गतवर्षे देहल्यां संस्कृतशिक्षकाः स्वविद्यालयच्छात्रेभ्यः एतानि पुस्तकानि विक्रीय मासद्वये एव १,५०,००० पुस्तकानि तावन्ति गृहाणि प्रवेशितवन्तः । प्रत्येकम् अपि संस्कृतशिक्षकः संस्कृतानुरागी वा २००-३०० पुस्तकानि क्लेशेन विना विक्रेतुं शक्नोति । धनिकाः, संस्कृताभिमानिनः प्रार्थनीयाः यत् ५०-१०० पुस्तकानि क्रीत्वा वितरन्तु इति । 'एकैकस्मै एकं पुस्तकम्' इति विक्रयणापेक्षया 'एकैकस्मै अपि पञ्च वा दश वा पुस्तकानि' इत्येवंसंख्यया विक्रयणं क्रियते चेत् प्रत्येकमपि कार्यकर्ता वर्षाभ्यन्तरे कतिपयसहस्त्र-पुस्तकानां विक्रयणं कर्तुं शक्नोति । यदि 'अहम् एकलक्षपुस्तकानां विक्रयणं करोमि' इति यः कोऽपि लक्षपुस्तकानां लक्ष्यं स्वीकरोति, तर्हि.... !

संस्कृतवाङ्मये यद् विज्ञानं निहितम् अस्ति तत्सम्बन्धे अस्माभिः नगरे विभिन्नस्थानेषु भाषणकार्यक्रमाः आयोजनीयाः । सन्देशे पूर्वं प्रकाशितान् विज्ञानसम्बन्धिलेखान् पठित्वा एव कश्चन कतिपयघण्टाः यावत् भाषणं कर्तुं शक्नोति । तादृशविषयाणां श्रवणेन जनाः प्रभाविताः भवन्ति । संस्कृतं प्रति आकृष्टाः भवन्ति । अतः 'संस्कृतवाङ्मये विज्ञानं तन्त्रज्ञानं' च इति विषयमधिकृत्य अत्यधिकस्थानेषु भाषणानि आयोजनीयानि । तदर्थं भाषणकाराः सज्जीकरणीयाः । 'संस्कृते विज्ञानम्' इत्येतद् अद्य अस्माकं 'Trump Card' भवितुमर्हति ।

कांश्चन बालान् संस्कृतेन भाषणं कर्तुं सज्जीकृत्य तेषां द्वारा अन्यान्य-वेदिकासु भाषणानि, कथाः, विनोदकणिकाः, सम्भाषणानि वा वाचयितुं शक्यन्ते । बालानां संस्कृतभाषणं श्रुत्वा जनाः अत्यन्तं प्रभाविताः भवन्ति । तेन बालानामपि प्रेरणा भवत्येव ।

संस्कृतवर्षावसरे विशेषतया भाषणस्पर्धा, सम्भाषणप्रदर्शनस्पर्धा, कथाकथनस्पर्धा, विनोदकणिकास्पर्धा, रसप्रश्नस्पर्धा च भवेयुः । यदि

संस्कृतेन वेषभूषास्पर्धा (Fancy Dress competition) अपि आयोज्येत तर्हि सा अपि आकर्षिका भवेत् ।

सर्वत्र संस्कृतस्य प्रदर्शिनी अपि आयोजयितुं शक्यते । तत्र लेखनसामग्री, प्रसाधनसामग्री, वेषभूषा, पाकवस्तूनि इत्येवंप्रकारेण सर्वाण्यपि नित्योपयोगीनि सर्वविधवस्तूनि स्थापनीयानि । तत्रैव तेषां संस्कृतनामानि लिखित्वा स्थापनीयानि । जनाः एतेन बहु प्रभाविताः भवन्ति । एतस्यामेव प्रदर्शिन्यां संस्कृतसम्बन्धे विचारदायकवाक्ययुक्तानि फलकानि अपि लिखित्वा स्थापनीयानि । संस्कृत-विज्ञान-सम्बन्धि-चित्राणि अपि लेखयित्वा स्थापनीयानि ।

सर्वेषु अपि मन्दिरेषु संस्कृतवर्षस्य बोधकम् एकं फलकं यथा भवेत् तथा अस्माभिः प्रयतनीयम् । मन्दिरेषु कतिपयानि व्यवहारवाक्यानां भित्तिपत्राणि अपि भवन्ति चेत् इतोऽपि उत्तमम् ।

'भवन्तः स्वसंस्थामाध्यमेन कञ्चित् संस्कृतकार्यक्रमं कुर्वन्तु, वयं 'दिनस्य एकं वाक्यम्' इति योजनानुसारं ३६५ वाक्यानि सज्जीकृत्य दद्मः, भवन्तः एव तस्य प्रकाशनं कुर्वन्तु, स्वसंघटनमाध्यमेन प्रतिदिनमेकं वाक्यं पाठयन्तु, पत्रेषु, मुद्रणेषु, मुखपत्रिकासु संस्कृतवर्षस्य उल्लेखं च कुर्वन्तु' इति विविधसंघटनानि संस्थाः च अस्माभिः प्रार्थनीयाः ।

संस्कृतशिक्षकाणां काचित् महती शक्तिः अस्ति, सा एव छात्रशक्तिः । स्वस्य विद्यालयस्य छात्राणां माध्यमेन पत्रकप्रचारः, संश्लेषकप्रचारः, 'संस्कृतं वदतु' -पुस्तकविक्रयणम्, शोभायात्रा – इत्येवं बहुविधकार्याणि कारयितुं शक्यन्ते । यावत् शिक्षकः तेभ्यः कार्येभ्यः स्वस्य निमित्तं धनलाभं न करोति, तावत् केऽपि तस्य विरोधं न कुर्वन्ति । फलक-घोषणादिभिः युक्ता छात्राणां शोभायात्रा यदि नगरे आयोज्येत तर्हि तेन एकम् उत्तमं वातावरणं निर्मितं भवति । यदि कस्यचित् नगरस्य सर्वे संस्कृतशिक्षकाः स्वविद्यालयानां छात्राणां द्वारा उपरिसूचितानि सर्वाणि कार्याणि कारयन्ति तर्हि अवश्यमेव तत् नगरं संस्कृतमयं भवेत् ।

कश्चन सप्ताहः अथवा पक्षः सम्पर्कसप्ताहः / पक्षः इति निश्चेतव्यः ।

तदा तत्स्थानीयाः सर्वे संस्कृतज्ञाः, छात्राः, संस्कृतानुरागिणः च मिलित्वा प्रत्येकं गृहं कार्यालयं च गत्वा संस्कृतसम्बद्धं पत्रकं दत्त्वा 'संस्कृतं वदतु' - पुस्तकं विक्रीय प्रचाराभियानं कुर्युः ।

जिल्लास्तरे संस्कृतशिक्षकसम्मेलनं, छात्रसम्मेलनं, सम्भाषणोत्सवः, संस्कृतसङ्गमः, संस्कृतसन्ध्या, क्रीडोत्सवः, संस्कृतमेला, व्याख्यानमाला, सम्भाषणशिबिरमाला इत्यादयः नानाविधाः कार्यक्रमाः भवितुम् अर्हन्ति । सर्वदा यः कोऽपि कार्यक्रमः सञ्चाल्यमानः भवेत्, तदुद्घाटनसमारोपयोः वार्ताः समाचारपत्रेभ्यः पत्रिकाभ्यः अवश्यं दातव्याः, येन संस्कृतवर्षे वार्तापत्रेषु आवर्षं संस्कृतसम्बन्धिवार्ताः प्रकाश्यमानाः स्युः ।

पत्रालयद्वारा संस्कृतशिक्षणयोजना इदानीं सर्वासां प्रादेशिकभाषाणां माध्यमेन अस्ति । संस्कृतवर्षे तादृशं किञ्चित् अभियानं स्वीकरणीयं यत् यः यः संस्कृतं न जानाति सः सर्वः अपि पत्रालयद्वारा संस्कृतशिक्षणयोजनां स्वीकुर्यात् । एकैकः अपि कार्यकर्ता, संस्कृतच्छात्रः, संस्कृतानुरागी, संस्कृतज्ञः चापि न्यूनातिन्यूनं दश जनान् पत्राचारद्वारा संस्कृतशिक्षणाय योजयेत् ।

प्रत्येकं संस्कृतपाठशाला संस्कृतविद्यालयः च स्वनगरे स्वजिल्लाक्षेत्रे वा केन प्रकारेण संस्कृतवर्षावसरे संस्कृतप्रचारः कर्तव्यः इति योजनां कृत्वा विद्यालयीयशिक्षकेभ्यः छात्रेभ्यः क्षेत्रकार्ययोः वितरणं कुर्यात् । एतस्मिन् वाणिज्ययुगे सर्वस्य अपि Marketing करणीयं भवेत् । यदि संस्कृतविद्यालये पर्याप्तमात्रेण छात्रैः भवितव्यं तर्हि संस्कृतस्य 'मार्केटिङ्ग्' चिन्तनीयम् ।

राष्ट्रियस्वयंसेवकसंघस्य भूतपूर्वः सहसरकार्यवाहः स्वर्गीयः श्रीयादवरावजोशीमहोदयः संस्कृतचन्दमामायाः प्रतिकृतिम् एकां सर्वदा स्वसमीपे स्थापयति स्म । प्रवासावसरे सर्वत्र सर्वेभ्यः तां पत्रिकां दर्शयति स्म । वयमपि सदा सम्भाषणसन्देशस्य प्रतिकृतिम् एकां स्वेन सह सर्वत्र नयेम, दर्शयेम च ।

नागपुरस्थः प्रज्ञाभारती डा॰ श्रीधरभास्करवर्णेकरः द्वादश वर्षाणि

यावत् संस्कृतसम्भाषणव्रतम् आचरितवान् आसीत् ! इदानीं संस्कृतवर्षे केचन संस्कृतसम्भाषणव्रतम् आचरिष्यन्ति चेत्.... ! न्यूनातिन्यूनं गृहे विद्यालये वा शक्येत.... !

संस्कृतवर्षे सर्वेऽपि सक्रियाः भवेम । सर्वदा क्रियाशीलाः, चैतन्यशीलाः भवेम । प्रतिदिनं यत्किमपि संस्कृतकार्यं कुर्याम । लघु अपि कार्यं भवतु, परन्तु कुर्याम । एवं न चिन्तनीयं यत् 'अहम् एकः एव अस्मि ।' यतः दशानां गणनायाः आरम्भः एकतः एव खलु भवति ? शतस्य, सहस्रस्य, लक्षस्य वा भवतु गणनायाः आरम्भः एकतः एव; न कदापि दशतः विंशतितः वा । अतः एकतः आरम्भः भवति चेत् पश्चात् द्वितीयः संयुक्तः भवति, पश्चात् तृतीयः इत्येव क्रमः । गङ्गोत्र्यां गङ्गा महानदीरूपेण न उद्भवति, अपि तु बिन्दुरूपेण । ततः प्रवहति इति कारणतः तया पश्चात् महानद्या भूयते, गङ्गासागरेण भूयते । एवमेव गतिशीलतायाः कारणतः एकैकेनापि स्वक्षेत्रे गच्छता कालेन महत् जनान्दोलनम् उत्पादयितुं शक्यते । सर्वत्र अन्धकारे सति एकोऽपि दीपः दूरे विद्यमानेभ्यः आशादीपः भवति, दिक्सूचकः भवति । अतः वयं दीपाः इव ज्वलेम । प्रज्वलेम । निरन्तरं प्रज्वलेम ।

***'प्रदीपयेम जगत्सर्वम्' ।***



[सम्भाषणसन्देशः - फेब्रवरी, १९९९]

# १५. सम्प्रश्नः

**प्र - एतेषु दिनेषु विश्वविद्यालयेषु संस्कृतच्छात्राणां संख्या न्यूना जायमाना अस्ति । तत्परिहाराय किं करणीयम् ?**

उ - संस्कृतस्य 'Marketing' करणीयम् । महाविद्यालयेषु सम्भाषण-शिबिराणि करणीयानि । विश्वविद्यालयसंस्कृतविभागजनैः स्नातकच्छात्राणां कृते पूर्वस्नातकच्छात्राणां कृते च अन्यान्य-महाविद्यालयेषु कार्यक्रमाः स्वीकरणीयाः । 'विज्ञानं संस्कृतं च', 'अर्थशास्त्रं संस्कृतं च', 'कम्प्यूटर् संस्कृतं च' - इत्येतादृशविषयान् अधिकृत्य सङ्गोष्ठीनाम् आयोजनं, तत्सम्बन्धिसाहित्यनिर्माणं च करणीयम् । आधुनिकवर्तमानविषयाणां संस्कृतस्य च सम्बन्धः कल्पनीयः । स्नातकोत्तरकक्ष्याच्छात्राः महाविद्यालयान् गत्वा स्नातकच्छत्रान् उद्दिश्य, स्नातकच्छात्राः द्वादशकक्ष्याछात्रान् उद्दिश्य च प्रेरणाभाषणं कुर्युः। संस्कृतविभागस्य प्रचारपत्रकाणां मुद्रणं कृत्वा वितरणं करणीयम् । सम्भाव्यच्छात्राणां 'स्नेहमेलनं' करणीयम् । अद्य विदेशीयविश्वविद्यालयाः भारते स्वस्य Marketing कथं कुर्वन्ति इति किञ्चित् परिशील्यते चेत् बहवः उपायाः स्फुरन्ति ।

**प्र - संस्कृतकार्यकर्तॄणां कृते वस्त्रधारणविषये निर्दिष्टाः नियमाः केऽपि (संस्कृतभारतीपक्षतः) सन्ति किम् ? लौकिकम् अत्याधुनिकं जीवनं कुर्वती-अहं संस्कृतकार्यं कर्तुं किम् अनर्हा ?**

उ - वस्त्रम्, उपासनाक्रमः - इत्यादिषु विषयेषु यदा निर्दिष्टता आनीयते तदा सः एव एकः 'पन्थाः' भवति । पृथक् पथिनिर्माणम् अस्माकम् उद्देशः न । संस्कृतं समाजस्य सर्वक्षेत्रेषु व्याप्तं भवतु इति अस्माकम् अपेक्षा यथा अस्ति तथैव समग्रस्य समाजस्य सङ्घटनं भवतु, तत्र

गुणात्मकपरिवर्तनं भवतु इत्यपि अस्माकम् अपेक्षा ।
समाजे बहु विविधताः सन्ति । ताः विविधताः रक्षन्तः एव वयं कार्यं कुर्मः । संस्कृतभारतीकार्यकर्तॄणां कृते किमपि निर्दिष्टं वस्त्रं नास्ति । भारतीयसंस्कृत्याः अनुरूपतया यत्किमपि वेषं धर्तुं शक्यते एव । अन्यच्च, अत्याधुनिकं जीवनं नाम किम् ? यावत् पश्चिमदेशानाम् अनुकरणमेव आधुनिकत्वस्य लक्षणं नास्ति, तावत् चिन्ता नास्ति । अस्माकं तु प्राचीन-आधुनिकयोः, पूर्वपश्चिमयोः समन्वयदृष्टिः भवेत् । सर्वसमावेशकविचारः भवेत् ।
अस्माकं रूढिवादः अपि नास्ति, स्वेच्छाचारः अपि नास्ति । कस्मिंश्चित् अपि विषये दुराग्रहः अपि नास्ति । परन्तु सांस्कृतिक-पारम्परिक-जीवन-आदर्शानां विषये अभिमानः अस्ति । जीवनस्य सर्वासु अभिव्यक्तिषु भारतीयताम् आनेतुं, भारतभूम्याः सुगन्धं प्रसारयितुं च अस्माकं प्रयत्नः भवति ।

**प्र – सम्भाषणशिबिरसञ्चालनस्य प्रशिक्षणार्थं प्रशिक्षणवर्गाः प्रतिराज्यं किमर्थम् अधिकतया न चलन्ति ?**

**उ –** सम्भाषणशिबिरशिक्षकाणां संख्यां वर्धयितुं प्रतिराज्यं शिक्षक-प्रशिक्षणवर्गाः अधिकाः करणीयाः । ते च वर्गाः दशदिवसीयाः आवासीयाः च भवन्ति । तेषु वर्गेषु न केवलं सम्भाषणशिबिरशिक्षक-प्रशिक्षणम्, अपि तु संस्कृतप्रचारस्य विविधाः उपायाः अपि बोधनीयाः भवन्ति । संस्कृतभारत्याः कार्यम् (लक्ष्यं, मार्गः च), कार्यपद्धतिः, कार्यक्रमाः, कार्यकर्ता, कार्यतन्त्रं, कार्ययोजना, कार्यनिर्वहणम् इति सप्तककाराणां विषये प्रशिक्षणं करणीयं भवति । एतादृशविषयान् सञ्चालितसम्भाषणशिबिराः, कृतप्रयोगाः, क्रियमाणकार्याः च कार्यकर्तारः केवलं बोधयितुं शक्नुवन्ति । तादृशैः पुनः दशदिनानां समयः दातव्यः भवति । अतः सक्रियाः, व्युत्पन्नाः, समयदातारः, अनुभविनः च प्रशिक्षकाः अद्य अधिकसंख्यया अपेक्षिताः, येन वयम् अधिकशिक्षकप्रशिक्षणवर्गान् चालयितुं शक्नुयाम । अतः

वर्तमानकार्यकर्तारः प्रशिक्षकत्वसम्पादनाय प्रयत्नं कुर्युः ।

**प्र** - ***यस्मिन् देशे वाग्देवतायाः वन्दनं साम्प्रदायिकं भवति, यत्र हि राष्ट्रस्य पुण्यस्मरणं विवादविषयः भवति, यत्र च पलाण्डु-सदृशाः क्षुल्लकपदार्थाः शासनपातकाः अपि भवन्ति, तस्मिन् देशे संस्कृतहितसिद्धये किं करणीयम् ? किं किमपि करणीयम्? किमपि करणीयं चेत् तदर्थं कुतः प्रेरणां शक्तिं च प्राप्नुमः ? किम् एतानि निराशतायाः पर्याप्तकारणानि न सन्ति ?***

**उ** - गतेषु सार्धैकशतवर्षेषु भारते या मेकालेप्रणीता शिक्षणव्यवस्था आसीत्, या च अद्यापि अनुवर्तते, तया व्यवस्थया एव वर्धितानां सर्वेषां शिक्षितभारतीयानां काचित् विशिष्टा मानसिकता (Mind - set) निर्मिता अस्ति । जनमानसे काश्चन धारणाः रूढमूलाः जाताः सन्ति । ताः धारणाः, भावनाः, विचाराः वा परम्परया आगच्छन्त्यः इव एतस्मिन् शतके जनेषु सङ्क्रान्ताः जायमानाः आसन् । यथा - आर्याः बहिस्ताद् आगताः, संस्कृतं मृतं, हिन्दुः इति कथनं सङ्कुचितं, मतीयम्, असमीचीनम् इत्यादिरूपेण एषा सूची दीर्घा अस्ति । तस्याः मानसिकतायाः अपरः परिणामः एव विकृत-सेक्युलरवादः । यावत् एतां मानसिकतां वयं न भञ्जयामः, समाजमानसतः तां समूलं न नाशयामः, तावत् संस्कृतस्य उन्नतिः न भविष्यति । यतः सा मानसिकता संस्कृतम् उपरि आगन्तुं न त्यजति । अपि च संस्कृतस्य सम्बन्धे अपप्रचारं कुर्वती भवति । सरस्वतीवन्दनायाः विरोधमपि तस्याः मानसिकतायाः जनाः एव कुर्वन्ति । मेकालेपुत्राः, मार्क्स्पुत्राः, केचन स्वार्थपरराजनीतिज्ञाः चेति त्रिविधाः जनाः संस्कृतस्य अहितम् आचरन्ति । अतः भवान् संस्कृतस्य हितम् इच्छति चेत् मेकाले-मार्क्स्-मानसिकतायाः सार्वत्रिकरूपेण मूलोच्चाटनाय कार्यतन्त्राणि चिन्तयतु, भारतीयविचारवतां महर्षिपुत्राणां सङ्ख्यां वर्धयतु ।

यदा देशे राष्ट्रभक्तेः स्वाभिमानस्य च महान् प्रवाहः भविष्यति तदा

संस्कृतभाषा पुनः व्यवहारपथम् आगमिष्यति । अतः राष्ट्राभिमाननिर्माणाय प्रयतनीयम् ।

संस्कृतवाङ्मये निहितं विज्ञान-तन्त्रज्ञानादिसम्बन्धिज्ञानं यदा बहिः प्रकाशितं भविष्यति तदा संस्कृतं समाजेन अपेक्षितं भविष्यति । अतः तादृशम् अध्ययनं, शोधकार्यं च एकैकेनापि आरब्धव्यम् । सरस्वतीवन्दनायाः, अनिवार्यतया संस्कृतशिक्षणस्य च विरोधं कृतवन्तः इत्येतावन्मात्रं दृश्यते चेत् निराशता भवेत् । एतेन सरस्वतीवन्दनादिप्रकरणेन संस्कृतं देशे सर्वत्र परिचर्चायाः विषयः जातः, संस्कृतं पुनः जनानां दृष्टिपथम् आगतं, चिन्तनविषयश्च जातः इत्येतद् दृश्यते चेत् आशा भवेत् । अतः आशा निराशता च यत् येन प्रकारेण पश्यामः, तत् अवलम्ब्य अस्ति । भावात्मकचिन्तनेन, भावात्मकभाषणेन च सर्वेषाम् उत्साहः वर्धते । वीरसैनिकाः युद्धस्य प्रतीक्षायां भवन्ति । यतः युद्धे एव ते स्वीयं शौर्यं दर्शयितुं शक्नुवन्ति । प्रकृतं देशे बौद्धिकयुद्धम् आरब्धम् । संस्कृतज्ञाः वयम् अस्माकं धीशक्तिं पराक्रमं च दर्शयेम ।

प्रेरणां शक्तिं च कुतः प्राप्नुमः इति प्रश्नः । सर्वे विद्युद्दीपाः प्रकाशार्थं विद्युज्जनकतः (Generator) विद्युतम् अपेक्षन्ते । भवान् 'Bulb' भवति, अथवा 'विद्युज्जनकः' भविष्यति ? गौतमबुद्धस्य वाक्यं स्मरामः - 'आत्मदीपो भव' ।

**प्र -** ***कैश्चित् विद्वद्भिः उच्यते यत् भाषायाः जनसमूहे प्रसारणार्थं सुगमीकरणं कदाचित् तस्याः रूपमेव परिवर्तयेत्, गच्छता कालेन तस्यां कालुष्यमपि समानयेत् इति । विपण्यां सामान्यैः व्यवह्रियमाणायाः सर्वस्याः अपि भाषायाः शुद्धता बहुशः बाधिता दृश्यते । संस्कृतस्यापि एवं न भवेत् किम् ? ईदृश-प्रदूषणात् संस्कृतस्य परिरक्षणाय कोऽपि उपायः अस्ति वा ?***

**उ -** यावत् 'संस्कृतस्य संस्कृतत्वं रक्षन्तः एव संस्कृतभाषां व्यवहारपथे आनेष्यामः' इति अस्माकम् आग्रहः प्रयत्नः च भवति तावत्

संस्कृतभाषायाः ह्रासः न भविष्यति, हानिः अपि न भविष्यति । कार्यानानि चालनाय विद्यन्ते, न तु अपघातभयेन कारस्थानके (Garrage मध्ये) स्थापनाय, अथवा प्रदर्शनकोष्ठे (Show - Room मध्ये) प्रदर्शनाय । नौका तरङ्गभयेन नौकास्थानके एव न तिष्ठति !

भाषणेन खलु भाषायाः भाषात्वं सिद्ध्यति ? व्यवहाराभावे संस्कृतस्य भाषात्वं कुतः ?

भाषायाः प्रयोगेण केवलेन भाषाविकासः भवति, तदभावे क्षयं गमिष्यति इति सर्वसम्मतः सिद्धान्तः, जागतिकः अनुभवः च ।

अकस्मात् संस्कृतभाषा नष्टा चेदपि इदानीं यथा अस्ति तथा अनन्तरमपि ग्रन्थेषु तद् संस्कृतं भविष्यत्येव खलु ?

अथवा किम् अस्माकं चिन्तनेन ? व्याकरणमहाभाष्यस्य आशयं परिशीलयतु तावत् -

महाभाष्ये पष्पशाह्निके दोषविषये (अपशब्दविषये) विस्तरेण चर्चा कृता दृश्यते । तत्रत्यानि पङ्क्तिमात्राणि अत्र उल्लिख्यन्ते - (विस्तर-भयात् विवरणं न लिख्यते ।)

- ❑ शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सः अभ्युदयेन युज्यते ।
- ❑ हिक्कहसितकण्डूयितानि नैव दोषाय भवन्ति नाभ्युदयाय । अथवा अभ्युपाय एव अपशब्दज्ञानं शब्दज्ञाने । यो हि अपशब्दान् जानाति, शब्दान् असौ जानाति ।
- ❑ अथवा कूपखानकवत् एतत् भविष्यति । तद्यथा -
  कूपखानकः कूपं खनन् यदापि तदीयमृदा पांसुभिश्च अवकीर्णो भवति, सः अप्सु सञ्जातासु तत एव गुणम् आसादयति, येन स च दोषो निर्हण्यते । भूयसा च अभ्युदयेन योगो भवति । एवम् इहापि ।

❑❑

# १६. प्रश्नः अस्माकं दृष्ट्याः

*''संस्कृतक्षेत्रे अपेक्षितं परिवर्तनम् आनेतुम् एतावता अपि किमर्थं न शक्ताः इति पृष्टे सति मम भाति - अवसराणाम्, आनुकूल्यानाम्, अवकाशानाम्, अनुदानानां वा अभावस्य प्रश्नः न । प्रश्नः अस्माकं दृष्ट्याः ।''*

केम्ब्रिज्विश्वविद्यालयस्य कश्चन प्राध्यापकः स्वस्य शान्ते अध्ययन-प्रकोष्ठे उपविश्य अध्ययने निमग्नः आसीत् । तदा उद्विग्नः कश्चन आंग्लसैनिकः तम् अध्ययनप्रकोष्ठं प्रविश्य प्राध्यापकम् आक्षिप्तवान् - ''इदानीं जर्मनविरुद्धं क्रियमाणतः युद्धतः मया मत्सदृशैः अन्यैः च बहुभिः सैनिकैः असह्याः मानसिकाघाताः अनुभूयमानाः सन्ति । भवान् कथं तत्र किञ्चिदपि भागं न वहति ?'' इति ।

प्राध्यापकः शान्ततया तं सैनिकं पृच्छति - ''भवान् केन निमित्तेन युद्धं कुर्वन् अस्ति ?''

तत्क्षणम् उत्तरम् आगतम् - ''एतं देशं रक्षितुम् ।''

सः विद्वान् ज्ञातुम् इच्छुकः सन् पृच्छति - ''किं नाम सः देशः, यस्य रक्षणाय भवान् स्वीयं रक्तं दातुं सज्जः अस्ति ?''

सैनिकः उत्तरं दत्तवान् - ''भूभागः, तत्रत्याः जनाः च ।''

''किम् एतावदेव.... ?''

पुनः प्रश्ने कृते सैनिकः उक्तवान् - ''केवलम् एतावद् न, अपि तु देशस्य संस्कृतिः अपि, याम् अहं रक्षितुम् इच्छामि ।''

तदा प्राध्यापकः शान्ततया उक्तवान् - ''अहं तस्यै संस्कृत्यै मदीयं योगदानं कुर्वन् अस्मि ।''

सैनिकः शान्तः अभवत् । सः आदरेण तं प्राध्यापकं नमस्कृतवान् ।

तथा च इतोऽपि महत्तरपराक्रमेण स्वस्य देशस्य सांस्कृतिकपरम्परां रक्षितुं सङ्कल्पं कृतवान् ।

एवं द्वितीयमहायुद्धकाले यदा आंग्लेयाः जर्मनविरुद्धम् अन्तिमयुद्धं कुर्वन्ति स्म तदा प्रत्येकमपि व्यक्तिः देशस्य अन्तिमविजयार्थं स्वीयया रीत्या सहयोगं करोति स्म इति श्रूयते ।

* * *

उपरितनकथया आरभ्यमाणे भारतस्य सर्वेच्चन्यायालयनिर्णये (सर्वोच्चन्यायालये 'केन्द्रीय-माध्यमिकशिक्षाबोर्ड्-पाठ्यक्रमे संस्कृतस्य स्थानम्' इति विषये कृते अभियोगे न्यायमूर्तिना श्री कुलदीपसिंहमहोदयेन, न्यायमूर्तिना श्री हंसारियामहोदयेन च दत्ते संस्कृतपरे निर्णये) विषयद्वयं सुस्पष्टं प्रतिपादितं यत् 'भारतस्य सांस्कृतिकपरम्परायाः रक्षणार्थं सांस्कृतिकभाषा संस्कृतम् अत्यावश्यकम्' इति, तथा च 'संस्कृतपाठनं 'सेक्युलरिसम्'विरुद्धं न भवति, न वा अरेबिक्पर्षियन्-इत्यादिभाषाः संस्कृतसमानाः भवन्ति' इति ।

१९६८तमे वर्षे प्रकाशितायां प्रसिद्धायां शिक्षानीतौ अपि उक्तं यत् ''भारतीयभाषाणां विकासार्थं, देशस्य सांस्कृतिकैकतार्थं च संस्कृतस्य योगदानं मनसि निधाय...'' इति । संस्कृतभाषायाः द्वारा सांस्कृतिकी एकता भवतीति तात्पर्यम् । तस्मात् संस्कृतम् अस्माकं सांस्कृतिकभाषा ।

वस्तुतः उपर्युक्तः 'सांस्कृतिकभाषा संस्कृतम्' इत्येषः एव संस्कृतस्य आधारः । यतः प्रादेशिकभाषा-मातृभाषा-सम्पर्कभाषा-राजभाषादिषु कस्मिंश्चिदपि विभागे संस्कृतस्य स्थानं न भवत्येव । अतः सांस्कृतिकभाषा इति आधारेण विना भाविनि काले राजकीयनीतिषु शैक्षिकनीतिषु च संस्कृतेन योग्यम् अपेक्षितं च स्थानं प्राप्तुं न शक्यते ।

आंग्लेयानां योजनानुसारं गतेषु सार्धैकशतवर्षेषु संस्कृतं तावत् 'Classical language' इति चित्रितम् आसीत् । एतादृशं संस्कृतस्य वर्तमानं 'Brand image' अस्माभिः परिवर्तनीयम् । 'सांस्कृतिकभाषा संस्कृतम्' इति चित्रनिर्माणं करणीयम् । किमर्थम् इति वदामि -

प्रकृतं केन्द्रसर्वकारेण 'SAMSKRIT AND CLASSICAL LANGUAGES COMMISSION' स्थापनीयम् इति केचन प्रयासरताः सन्ति । तत्र मुख्यभूतानि कतिचन कारणानि एवं सन्ति - प्रतिराज्यं संस्कृतशिक्षणव्यवस्था भिन्ना अस्ति, स्तरः भिन्नः, उपाधीनां मान्यताः असमानाः, संस्थानां प्रशासनं दुर्बलम् - इत्यादिभिः बहुभिः कारणैः एतादृशसमस्यानां निवारणाय केन्द्रीयः कश्चन सांविधानिकः, पर्याप्तमात्रेण धनाधिकारादिसहितः आयोगः आवश्यकः इति वादः । १९९१तमे वर्षे श्री टि.एन्. चतुर्वेदिमहोदयस्य अध्यक्षतायां रचितया समित्या 'संस्कृतभाषायाः परम्परा कदापि कवचेन आवृता न आसीत्, (इतरभाषाभ्यः आदानप्रदानविषये पिहितद्वारा न आसीत् ।) पालि, प्राकृत, हिब्रू, हिटैट्, अरेबिक्, पर्षियन्, चैनीस्, जापानीस्, कोरियन् - इत्यादिभाषाः संस्कृतवाङ्मयतः प्रेरिताः आसन् इति कारणतः ताभिः भाषाभिः सह संस्कृतस्य अध्ययनेन एव समग्रदृष्टिः लभ्येत, अतः संस्कृत-आयोगस्य व्याप्तिविस्तारं कृत्वा 'Samskrit and Other languages Commission' इति स्थापनीयम्' इति प्रस्तावः कृतः । तदा तदानीन्तनेन शिक्षामन्त्रिणा अभिप्रेतं सूचितं च यत् संस्कृतभाषायाः विशेषोल्लेखं कृत्वा आयोगस्थापनेन इतरभाषाणामपि तादृश्यः अभियाचनाः भवेयुः, (आयोगस्थापनाय) अतः तस्य नाम 'Indian Classical Language Grants Commission' इति स्थापनीयम् इति ।

तदनन्तरं मानव-संसाधन-विकास-मन्त्रालयस्य संसदीय-स्थायि-समित्याः सांसदैः सूचितं यत् 'संस्कृतं बहुधा 'Classical language' इति परिगण्यते । परन्तु संस्कृतं वस्तुतः जीवन्ती भाषा अस्ति । यदि आयोगः स्थाप्यते तर्हि Classical भाषा संस्कृतेन सह न योजनीयाः, योज्यन्ते चेत् संस्कृतस्य Classical language इति असमीचीनचित्रं चिह्नितं भवेत्' इति । अतः सः विचारः तदा परित्यक्तः आसीत् । परन्तु तत्पश्चात् इदानीं पुनः शिक्षामन्त्रालये पूर्वतनविचारः अर्थात् 'Commission for Samskrit and Classical language' इत्यस्य स्थापनं चिन्त्यमानम् अस्ति ।

यदि एतद् क्रियागतं भविष्यति तर्हि संस्कृतस्य महती हानिः भविष्यति । संस्कृतस्य बलमेव समाप्तं भविष्यति । पालि-प्राकृत-अरेबिक्-पर्षियन्-इत्यादिभाषाणां स्थितिः का ? संस्कृतस्य का ? संस्कृतं सर्वदृष्ट्या तासां समकक्षतां प्राप्नोति । यद्यपि तत्र संस्कृतस्य प्राथम्यम् इति कथ्यते, तथापि तावतां भाषाणां मध्ये संस्कृतस्य हितं तत्र सुरक्षितं न भविष्यति । क्रमशः संस्कृतम् इतरभाषाभिः सह तत्सदृशी अन्यतमा भाषा भविष्यति । अतः अस्माभिः अस्य प्रस्तावस्य सम्पूर्णरूपेण विरोधः करणीयः ।

यदा केन्द्रीय-माध्यमिक-शिक्षाबोर्डद्वारा ऐच्छिकभाषात्वेन विद्यमानं संस्कृतम् अतिरिक्तभाषारूपेण स्थापयित्वा Foreign Languages & Oriental Languages इत्यत्र Oriental Languages मध्ये स्थापितं (वास्तविकतया तत्र चतस्रः विदेशीयभाषाः, तिस्रः प्राच्यभाषाः (Oriental) चेदपि तासु सप्तसु भाषासु षड्भाषाः विदेशीयभाषाः, एकमेव संस्कृतं भारतीयभाषा आसीत् ।) तदा Oriental Languages इति शिरोनाम्ना संस्कृतं विदेशीयभाषाभिः सह योजितम् अभवत् । इदानीं पुनः Classical languages इति भाषाभिः सह संस्कृतं योज्यते चेत् तदनन्तरं मुख्यधाराशिक्षणे संस्कृतस्य पुनरानयनाय द्वारमेव पिहितं भविष्यति ।

१९६८तमे वर्षे प्रकटितायां शिक्षानीतौ उक्तमस्ति यत् 'संस्कृत-भाषायाः पाठने नूतनविधीनां विकासाय प्रोत्साहनं करणीयम्' इति । परन्तु अद्यपर्यन्तं तद्विषये न किञ्चिदपि चिन्तितम् । कस्य दोषः ? शिक्षामन्त्रिणः ? नैव । शिक्षामन्त्रालयस्य अधिकारिणाम् ? नैव ।

१९८६-शिक्षानीतौ संस्कृतसम्बन्धे उक्ते Para 5.33 मध्ये - "To fulfil the need for the synthesis of knowledge, interdisciplinary research will be encouraged. Efforts will be made to delve into India's ancient fund of knowledge and to relate it to contemporary reality..." एतत्सम्बन्धे अपि अद्यपर्यन्तं बहु किमपि न कृतम् । कस्य दोषः.. ?

अहं चिन्तयामि यत् वयं बहु सरलतया इतरेषु दोषान् आरोपयितुं

शक्नुमः । परन्तु सत्ये विचारिते सति ज्ञायते यत् समस्यानाम् अपरिहारे वयमपि भागिनः स्मः इति । यथा Commission for Samskrit and Classical language इत्येतदर्थं कृतप्रयत्नेषु प्रयतमानेषु च संस्कृतज्ञाः अपि सन्ति । हर्षचरिते 'परिणामदर्शी' इति कश्चन शब्दप्रयोगः अस्ति । (करिष्यमाणस्य कार्यस्य परिणामं यः पूर्वमेव ज्ञातुं शक्नोति सः) संस्कृतज्ञैः अस्माभिः परिणामदर्शिभिः भवितव्यम् ।

१९६८ तमवर्षीयायां शिक्षानीतौ यत् 'संस्कृतशिक्षणविधौ नूतन-प्रयोगाः भवेयुः' इति उक्तं तदर्थं प्रयत्नशीलैः तु संस्कृतक्षेत्रस्य प्रमुखैः संस्कृतज्ञैः एव भवितव्यम् आसीत्, योजनाः कर्तव्याः आसन् च ।

'संस्कृतपाठ्यपुस्तकानि सरलानि न सन्ति, आकर्षकाणि न सन्ति' इति सर्वे वदन्ति । परन्तु तेषां परिवर्तनाय, परिष्काराय, परिवर्धनाय वा संस्कृतज्ञैः एव क्रियाशीलैः भवितव्यं खलु ! पाठ्यपुस्तकसमितिसदस्यानां सम्पर्कः करणीयः, शिक्षाविभागीयैः अधिकारिभिः मेलितव्यम्, आदर्शपाठाः लिखित्वा दातव्याः, शिक्षकेषु एतत्सम्बन्धे जागरणम् आनेतव्यम्, पत्राणि लेखनीयानि, लेखयितव्यानि इत्यादीनि कार्याणि करणीयानि भवन्ति ।

मम भाति - अवसराणाम्, आनुकूल्यानाम्, अवकाशानाम्, अनुदानानां वा अभावस्य प्रश्नः न । प्रश्नः - अस्माकं दृष्ट्याः !

अस्माभिः वार्तापत्रेषु विभिन्नविषयेषु पठ्यते स्म 'Vision-2000' इति । 'Information Technology सम्बन्धे भारतस्य Vision-2010' इति वा, अथवा भारतरत्नेन श्री अब्दुलकलामेन यथा पुस्तकं प्रकाशितम् - 'India-2020 A Vision for a new millenium । एतादृश Vision इत्यर्थे अत्रत्यः दृष्टिशब्दः प्रयुक्तः । यथा प्रत्येकं व्यक्तेः स्वजीवनस्य विषये एका दृष्टिः भवति तथा सामूहिकरूपेण संस्कृतस्य पुनःप्रतिष्ठापन-कार्यसम्बन्धे संस्कृतज्ञानाम् अस्माकं सर्वेषां काचित् दृष्टिः भवेत् खलु ! सा दृष्टिः का ? दृष्ट्यभावे सृष्टिः कथम् ?

एतद्दृष्टिविषयकं चिन्तनं कैः करणीयम् ? कस्मिन् मञ्चे करणीयम् ?

(यदि 'सम्भाषणसन्देश'पत्रिका प्रतिविश्वविद्यालयं, प्रतिमहाविद्यालयं, प्रतिविद्यालयं च यथा प्राप्नुयात् तथा एतस्याः ग्राहकजालं देशस्य कोणे कोणे प्रसारयितुं प्रत्येकं सम्भाषणसन्देशपाठकः प्रयत्नं परिश्रमं च करिष्यति, तर्हि तदा एषा पत्रिका एव सः चिन्तनमञ्चः भवितुमर्हति !)

वस्तुतः एतादृशाः चिन्तनीयाः विषयाः बहवः सन्ति । अद्यत्वे उद्योगवाणिज्यादिक्षेत्रेषु 'Quality' इति शब्दः सुप्रसिद्धः, मुख्यभूतः विषयः च, तद्वत् एव 'गुणवत्ता' इति विषयः यदि संस्कृतक्षेत्रे आनीयते, तर्हि तत् कार्यं संस्कृतस्य सञ्जीवकं भवेत् । संस्कृतस्य शिक्षणे गुणवत्ता, शिक्षकेषु गुणवत्ता, पाठ्यपुस्तकेषु गुणवत्ता, शिक्षणसंस्थासु गुणवत्ता, छात्रेषु गुणवत्ता - इति पञ्च अंशाः तत्र सन्ति । एतेषु पञ्चसु मुखेषु गुणवत्तावृद्धिः भवेत् । आदिमेषु त्रिषु गुणवत्तावृद्धिः भवति चेत् अनन्तरद्वये गुणवत्तावृद्धिः शीघ्रमेव भविष्यति । तत्रापि संस्कृतशिक्षकाणां गुणवत्तावर्धनाय योग्यानि पदानि न्यस्तानि चेत् अन्येषु चतुर्षु क्षेत्रेषु अपि गुणवत्ता अनुसृत्य आगमिष्यति ।

संस्कृतार्थं केन्द्रसर्वयारपक्षतः वित्तीयसाहाय्यं यत् भवति तत् द्विधा । साक्षात् केन्द्रेण दीयमानं (राष्ट्रियसंस्कृतसंस्थानद्वारा) तथा च राज्य-सर्वकारद्वारा दीयमानम् इति । व्यक्तये संस्थायै चेति । किंनिमित्तं तत् दीयते इत्येत्सम्बन्धे सम्भाषणसन्देशस्य अग्रिमे अङ्के विवरणानि प्रकाशयिष्यन्ते । यदा केभ्यश्चित् राज्यसर्वकारेभ्यः तत्रत्यानाम् सर्वकारीय-अधिकारिणाम् औदासीन्यकारणतः योजनाः एव न आगच्छन्ति, तदा तत्तद्राज्यनिमित्तम् आरक्षितं धनम् अनुपयुक्तं सत् व्यर्थं भवति । अतः राज्याधिकारिणां स्मारणम्, अनुवर्तनं च कर्तव्यं भविष्यति । विशेषतया संस्कृतविद्यालयेभ्यः कम्प्यूटरस्वीकरणाय, माध्यमिकविद्यालयेषु विज्ञान-शिक्षकाणां नियुक्त्यर्थं च विशेषतया आर्थिकप्रावधानम् अस्ति इति श्रूयते । सांसदानां क्षेत्रनिधितः अपि संस्कृतविद्यालयानां भवननिर्माणाय धनं प्राप्तुं शक्यते ।

सर्वकारस्य धनस्य उपयोगः अवश्यं करणीयः । परन्तु सर्वकारतः धनस्वीकरणं कथम् इत्येव एकबिन्दुकार्यक्रमः न भवेत् । अस्माकं कार्यं

सर्वकारीय-आर्थिक-अनुदानम् अवलम्ब्य स्थितं कार्यम् अपि न भवेत् । संस्कृतप्रचारकार्यं यावच्छक्यं जनानां सहयोगेन सम्पादनीयम् । सर्वकार-समीपं गम्यते चेत् केवलं धनं लभ्येत । जनसमीपं गम्यते चेत् धनं, जनाः च प्राप्येरन् । कार्यस्य मूलभूतः आधारः जनाः एव । बह्वीनां संस्थानां कृते तु सर्वकारतः धनप्राप्तिः एव 'साध्यं' (लक्ष्यं) भवति । भिक्षुकाणां विषये वदन्ति यत् ते पुनः पुनः परमुखानि एव पश्यन्ति, (याचन्ते), परिश्रमं न कुर्वन्ति इति । अस्माकं स्वभावेन तादृशेन न भवितव्यम् । अद्य संस्कृतस्य उज्जीवनसम्बन्धे, विकाससम्बन्धे च सर्वः अपि जनः, विशेषतया सर्वः अपि संस्कृतज्ञः 'सर्वकारस्य दायित्वं, सर्वकारेण करणीयम्' इति वदन् सर्वकारं प्रति दर्शयति, पश्यति वा । हन्त ! स्वकर्तव्यं विस्मरति सः ! अस्माभिः तु संस्कृतज्ञेषु स्वावलम्बनस्य, कर्तव्यस्य, स्वाभिमानस्य च दृष्टिः निर्मातव्या ।

गतेषु केषुचित् दशकेषु बिहारराज्ये महाविद्यालयेषु व्याख्यातृपदेभ्यः विज्ञापनासु 'व्याकरणं साहित्यं वा पठितवतां प्राथमिकता' इति प्रकाश्यते स्म इति कारणतः सर्वे छात्राः व्याकरणं साहित्यं च पठितवन्तः । परिणामतः अद्य बिहारे दर्शनविषयस्य शिक्षकाः एव न लभ्यन्ते । छात्राः अपि न सन्ति । एतस्मात् अस्माभिः पाठं पठित्वा यदि अग्रिमवर्षेषु देशे सर्वत्र संस्कृतशिक्षक-अध्यापक-व्याख्यातृप्रभृतिभ्यः पदेभ्यः विज्ञापनसमये 'संस्कृतेन सम्भाषणसामर्थ्यवताम् आद्यता' इति प्रकाश्यते तर्हि द्वित्रेषु वर्षेषु एव देशे सर्वे छात्राः संस्कृतसम्भाषणाभ्यासं करिष्यन्ति !

यथा इदानीं टि.वि. इत्येतद् प्रतिगृहं सामान्यम् अभवत् तथा अग्रे दशवर्षाभ्यन्तरे एव भारते कम्पूटर् गृहे गृहे सर्वसामान्यं भविष्यति । यथा इदानीं दूरभाषा प्रबलं सम्पर्कमाध्यमम् अस्ति तथा इण्टरनेट्, ई-मैल् न केवलं सम्पर्कमाध्यमं, शिक्षायाः अपि अन्यतमं माध्यमं भविष्यति । आंग्लमाध्यमविद्यालयेषु इदानीमेव कम्प्यूटररहितः प्राथमिकविद्यालयः कोऽपि न दृश्यते । तादृशस्थितौ संस्कृतविद्यालयाः कुत्र सन्ति ! अस्माभिः अविलम्बमेव प्रतिसंस्कृतविद्यालयं सङ्गणकशिक्षणम् आरब्धव्यम् ।

सङ्गणकज्ञानाभावे वयं संस्कृतज्ञाः कदाचित् पुनरेकवारं कूपं प्रविशेम ! सर्वे संस्कृतशिक्षकाः छात्राः च कम्प्यूटरविषयकं शिक्षणमपि प्राप्नुयुः, येन वयम् एतस्मिन् अवसरे नष्टावसराः सन्तः 'यानम् आरोढुं न शक्तवन्तः' इति वदन्तः जनाः इव न भवेम । यथा जगति मुद्रणक्रान्तिः यदा अभवत्, तदा संस्कृतेन 'तद् यानं न गृहीतम्' इति कारणतः अद्य लक्षशः ताडग्रन्थाः तथैव अवशिष्टाः अभवन्, पश्चात् वैज्ञानिकक्रान्तिः यदा जाता तदा संस्कृतं तावच्छतवर्षैः पृष्ठतः अस्ति इव भ्रमः अजायत (आंशिकरूपेण सत्यमपि)। इदानीं पुनरेकवारम् इतरेभ्यः अग्रे गमनाय अस्माकम् सुवर्णावकाशः अस्ति । किं संस्कृतक्षेत्रस्य नेतृगणः तत् सुन्दरम् उज्ज्वलं भविष्यं द्रष्टुं शक्नोति ... ?



[सम्भाषणसन्देशः - मे, १९९९]

# १७. संस्कृतविकासाय व्यक्तिविकासः

लोके जनाः त्रिविधाः भवन्ति । केचन वायुना नीयमाना नौका इव बाह्यापरिस्थित्यनुगुणं नीयमानं जीवनं यापयन्ति । अन्ये केचन जीवने लक्ष्यं निश्चित्य तदर्थं प्रयत्नशीलाः सन्तोऽपि विफलाः तिष्ठन्ति । परन्तु विरलाः एव केचन जीवनयोजनानुगुणं प्रतिपदं विजयिनः सन्तः प्रगतिपथे पुरः सरन्ति ।

प्रथमगणीयाः तावत्, जीवने लक्ष्यरहिताः । यत् स्थलं प्रति गन्तव्यं तत्सम्बद्धं लोकयानं ते न आरोहन्ति, अपि तु किमपि यानम् आरुह्य तद् यत्र गच्छति तत्र गताः भवन्ति । बाह्यवातावरणेन सञ्चालिताः ते अतीतस्य विषये खेदं कुर्वन्तः, भविष्यतः विषये दिवास्वप्नं पश्यन्तः, परान् दूषयन्तः, आत्मानं श्लाघमानाः वा सामान्यं जीवनं यापयन्ति । द्वितीयगणीयाः तु लक्ष्यवन्तः । परन्तु ते प्रयत्नदोषाणां कारणतः अपेक्षितं फलं न प्राप्नुवन्ति । ते परिश्रमशीलाः स्युः, परं कार्यसाधनकुशलाः न स्युः अपि । तृतीयगणीयाः एव अत्र चिन्तनविषयाः । ते एव जीवने जयन्ति, महत् साधयन्ति च ।

***मानदण्डः कः ?***

यशस्विजीवनं साधयितुं जीवने महत् सम्पादयितुं, सफलजीवनाय वा मार्गं निर्देष्टुम् अर्हाणि, व्यक्तित्वविकाससम्बन्धीनि, success literature इति कथ्यमानानि च पुस्तकानि विश्वे असङ्ख्यानि सन्ति । व्यक्तित्वविकासप्रशिक्षणकार्यक्रमाः अपि सदैव भवन्ति । तत्र प्रतिपाद्यमानानां, विकासाय अपेक्षितानां तत्त्वानां कौशलानां च विषये अस्माकं विमतिः नास्ति । परन्तु तत्र दीयमानायाः जीवनदृष्टेः भारतीयजीवनदृष्टेः च मध्ये महान् भेदः अस्ति । तेषां मार्गदर्शनं केवलं

स्वस्य जीवनशिखरप्राप्त्यर्थं च । परन्तु भारतीयदार्शनिकानां विचारः - आत्मनो मोक्षाय जगद्धिताय च कार्यं करणीयम् इति, परोपकारार्थं जीवनीयम्* इति च । सामान्यतः सर्वे अपि मानवाः धनं, कीर्तिं, ज्ञानं च सम्पादयितुं प्रयत्नं कुर्वन्ति । कश्चित् जीवने एतानि त्रीणि कियता प्रमाणेन सम्पादितवान् इत्येतस्य आधारेण सामान्यतः जीवनस्य सफलतायाः मापनं कुर्वन्ति जनाः । परन्तु सफलजीवनस्य मानदण्डः 'कियद् अर्जितवान्' इत्येतत् न; अपि तु 'कियद् प्रदत्तवान्' इत्येतत् ! 'जीवने यावद् आदानं स्यात् प्रदानं ततोऽधिकम् ।'

### *सिषाधयिषा*

साधयितुम् इच्छा सिषाधयिषा । आदौ तावत् व्यक्तेः मनसि इच्छा उत्पन्ना भवेत् खलु - मया जीवने महत् किञ्चित् साधनीयम् इति ? महाकार्याणि साधितवन्तः ये महापुरुषाः अभवन् ते जन्मसमये सामान्याः एव आसन् । ते एव सामान्याः जनाः अनन्तरकाले असामान्यं चिन्तनं कृतवन्तः इति कारणतः तेषां जीवनमपि असामान्यम् अभवत् । जीवनम् अर्थपूर्णं कर्तुं साहसमनोभावः आवश्यकः । प्रगतिं साधयितुं लोभरहिता महत्त्वाकाङ्क्षा आवश्यकी । इतरभिन्नेन भवितव्यं चेत् इतरभिन्नं चिन्तनं करणीयम् । महत् साधयेयम्, अद्भुतं दर्शयेयं, सुन्दरं सृजेयं, शिखरं प्राप्नुयाम्, अनुपमं निर्मायाम्, अकृतपूर्वं कुर्याम् - इत्येवम्प्रकारेण यदा मनसि सिषाधयिषा उदेति, सा च यदा तीव्रा भवति, तदा मानवस्य जीवनस्य प्रगतिः भविष्यति ।

### *स्वप्नाः द्रष्टव्याः*

स्वप्नाः द्रष्टव्याः एव । स्वप्नरहितः जनः यत्किमपि साधयितुं न शक्नुयात् । साधकः तावत् स्वप्नानां सफलीकरणाय एकैकं पदं निदधत् ध्येयमार्गे अविरतम् अग्रे गच्छति । अस्माकं कल्पनादारिद्र्यं न भवेत् ।

---

* *परिशील्यताम् - आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवः ।*
*परं परोपकारार्थं यो जीवति स जीवति ।।*

विवेकानन्दकेन्द्रस्य संस्थापकः श्री एकनाथरानडेमहोदयः घटनामेकां वर्णयति स्म ।

यदा सः कस्मिंश्चित् रेलस्थानके रेलयानस्य प्रतीक्षायाम् आसीत्, तदा पुरतः उपविष्टः कश्चन भिक्षुकः भोजनं कुर्वन् आसीत् । वामहस्ते शाकं, व्यञ्जनम्, उपसेचनं वा स्थापयित्वा कश्चित् यथा खादति तथा सः दक्षिणहस्तेन रोटिकायाः एकैकं खण्डं स्वीकृत्य रिक्तस्य वामहस्तस्य अग्रभागे स्पर्शयित्वा खादति स्म । ''भवान् किमर्थम् एवं करोति ?'' इति पृष्टे सति सः भिक्षुकः उक्तवान् - ''रोटिकया सह खादितुं किमपि नास्ति । 'वामहस्ते लवणम् अस्ति, रोटिकां लवणेन सह मेलयित्वा खादामि' इति भावनामात्रं कुर्वन् खादामि'' इति । वस्तुतः सः तस्मादेव भिक्षुकः जातः, यतः सः लवणात् उत्कृष्टं किमपि वस्तु कल्पनामात्रेण अपि द्रष्टुं न शक्नोति । भिक्षुकः लवणमात्रम् एव चिन्तयेत् इति नियमः नास्ति खलु ? किमर्थं लवणम् अस्तीति एतावन्मात्रम् एव तेन चिन्तनीयम् ? किमर्थं वा व्यञ्जनम् अस्तीति, मधुरम् अस्तीति वा न चिन्तनीयम् ?

जीवनस्य स्वप्नं पश्यतु भवान् । महान्तं स्वप्नं पश्यतु । तस्य स्वप्नस्य मूर्तरूपतासम्पादनाय २०-२५ वर्षाणां तपः आचरितुं मानसिकसज्जतां करोतु ।

### *लक्ष्यं निश्चिनोतु*

चित्रस्य, भवनस्य, प्रतिमायाः वा सृष्टिः द्विवारं भवति । चित्रस्य प्रथमसृष्टिः चित्रकारस्य मनसि भवति । भवनस्य प्रथमसृष्टिः अभियन्तुः मनसि, प्रतिमायाः प्रथमसृष्टिः शिल्पकारस्य मनसि च भवति । पश्चात् द्वितीया भौतिकी सृष्टिः क्रियते । स्वस्य जीवनप्रतिमायाः शिल्पिना स्वेन एव भवितव्यं चेत् आदौ स्वस्य मनसि एव जीवनस्य सुन्दरं चित्रं निर्मातव्यम् । जीवने स्वेन कीदृशेन भवितव्यं, किं साधनीयम् इति लक्ष्यं निश्चेतव्यम् ।

जीवनलक्ष्यनिर्णयसमये उन्नतं लक्ष्यं स्वीकरणीयम् । महद् लक्ष्यं स्वीकरणीयम् । केचन वदेयुः यद् 'महद् लक्ष्यं स्वीकृत्य तत् साधयितुं न

शक्नुमः चेत् किं प्रयोजनम् ? अतः स्वल्पमेव लक्ष्यं स्वीकुर्मः' इति । एतादृशं चिन्तनं समीपवर्तिलक्ष्यनिर्णयावसरे भवितुम् अर्हति । जीवन-लक्ष्यचिन्तनसमये तु अत्युन्नतं चिन्तनं करणीयम् ।

कञ्चित् छात्रम् अहं कदाचित् पृष्टवान् – 'भवान् जीवने कीदृशः भवितुम् इच्छति ?'

सः उक्तवान् – 'वित्तकोषे लिपिकारः भवितुम् इच्छामि' इति ।

मया पुनः पृष्टम् – 'लिपिकारः भवेयम् इति किमर्थम् ? अधिकारी भवेयम् इति चिन्तयतु ।'

तेन उक्तम् – 'अहम् अधिकारी एव भवितुम् इच्छामि ।'

अहं पुनः पृष्टवान् – 'किमर्थं प्रबन्धकः भवेयम् इति भवान् न चिन्तयति ?'

सः उक्तवान् – 'तादृशः अपि भवितुम् इच्छामि ।'

अनन्तरं मया – 'विभागीयप्रबन्धकः किमर्थं न ?', 'क्षेत्रीयप्रबन्धकः किमर्थं न ?', 'महाप्रबन्धकः किमर्थं न ?', 'निर्वाहकनिर्देशकः किमर्थं न ?', 'वित्तकोशस्य अध्यक्षः एव किमर्थं भवितुम् न इच्छति ?' इत्यादयः प्रश्नाः पृष्टाः । परन्तु सः छात्रः किमपि उत्तरं वक्तुं न शक्तवान् ।

अल्पचिन्तनं पापकरम् । हिमालयवत् उन्नतं चिन्तनं करणीयम् ।

लक्ष्यम् उन्नतं यथा, तथैव परार्थम् अपि भवेत् । स्वामी विवेकानन्दः वदति – 'उद्याने प्रतिदिनं लक्षशः कोटिशः वा पुष्पाणि विकसन्ति, सायं पतन्ति च । परन्तु तेषाम् एव पुष्पाणां जन्म सार्थकम्, यानि भगवतः पूजायाम् उपयुक्तानि भवन्ति' इति । येषां मानवानां जीवनकुसुमानि जनताजनार्दनस्य पूजार्थं, दरिद्रनारायणस्य सेवार्थम्, अज्ञानतिमिर-निवारणार्थं, समाजसेवार्थं, परोपकारार्थं च समर्पितानि भवन्ति, तेषां जीवनमेव सार्थकम् ।

यत् क्रियते तत् किन्निमित्तं क्रियते इत्येतदनुसारं तस्य फलितम् अपि भवति । भीष्म-दोण-अर्जुन-एकलव्यान् पश्यन्तु भवन्तः । ते चत्वारः अपि धतुर्विद्यायां सुनिपुणाः एव । भीष्मात् द्रोणः, द्रोणाद् अर्जुनश्च श्रेष्ठौ ।

चतुर्थः एकलव्यः अर्जुनम् अपि अतिशेते स्म । किमर्थम् ? भीष्म-द्रोणार्जुनानां त्रयाणां धनुर्विद्याभ्यासस्य उद्देशः स्वार्थपूर्णः आसीत् । भीष्मस्य स्ववंशसिंहासनरक्षणरूपः स्वार्थः । द्रोणस्य उद्देशस्तु राज-कुमाराणां धनुर्विद्याशिक्षणेन उदरपोषणं करणीयम् इति । अर्जुनस्य अभिलाषस्तु स्वयं विश्वे सर्वश्रेष्ठः धनुर्धरः भवेयम् इति । परन्तु एकलव्यः वने क्रूरजन्तुभ्यः साधुपशूनां संरक्षणाय धनुर्विद्याभ्यासं कृतवान् । तस्य उद्देशः परहितसाधनम् । फलतः परिणामः अपि असदृशः अभवत् ।

***अहं ब्रह्मास्मि !***

बहवः आत्मनि निहितां शक्तिम् अवगन्तुं न शक्नुवन्ति । अतः चिन्तयन्ति यत् 'अहं किं कर्तुं शक्नुयाम् ?' इति । मम ज्ञानं नास्ति, मम शक्तिः नास्ति, मम वाक्कौशलं नास्ति इत्येवंप्रकारेण आत्महीनभावनां अनुभवन्ति ते । एषा आत्महीनभावना एव विद्यमानां शक्तिम् आवृत्य तां गोपयति । अद्वैतवेदान्तस्य 'अहं ब्रह्मास्मि' इत्येतस्मिन् वाक्ये यथा उक्तम् अस्ति तथा अस्माभिः चिन्तनं करणीयम् । अहं सर्वशक्तः, मयि अपारा शक्तिः अस्ति, मयि असीमं सामर्थ्यम् अस्ति इति चिन्तनतः धैर्यम् आयाति । तदा सामर्थ्यस्य प्रकटनं भवति । अणौ महती शक्तिः निहिता भवति । तस्य अणोः स्फोटनेन शक्तेः आविष्कारः भवति । प्रत्येकं व्यक्तिः अपि अणुः इव ।

वयं सिंहः इव चिन्तनं कुर्याम । क्षुधया खिन्नः, वार्धक्येन कृशः, कष्टां दशाम् आपन्नः, आसन्नमरणः अपि सिंहः 'मदोन्मत्तगजसमूहस्य कुम्भं विदार्य मस्तिष्कस्य भक्षणं करोमि इत्येव चिन्तयति, न तु 'जीर्णं तृणं खादामि' इति । तद्वत् सर्वे संस्कृतज्ञाः 'मानमहताम् अग्रेसरः केसरी' इव पौरुषचिन्तनं कुर्युः । यदि 'न शक्यते' इति विचारः आगच्छति तर्हि 'किमर्थं न शक्यते', 'अशक्यमिति भवितुम् अशक्यम्' इति मनसि वदतु । 'न शक्यम्' इति वक्तुं मूर्खाः पर्याप्ताः, 'शक्यम्' इति दर्शयितुं धीराः आवश्यकाः । कष्टम् इति भीरुः चिन्तयति । योद्धा तावत् स्वत्वं दर्शयितुं कष्टपरम्पराणां प्रतीक्षायां भवति । तरङ्गभयेन नौका सदैव तटे एव न

तिष्ठति । शतस्य प्रतिकूलतानां सम्मुखीकरणाय सुदृढमनोबलमेकं पर्याप्तम् । अद्य कष्टानि सहामहे चेदेव श्वः कथाः वक्तुं शक्नुयाम ।

### *फलसिद्धिपर्यन्तम्*

समर्थव्यक्तित्वं परिणामकारिव्यक्तित्वं चेति व्यक्तित्वस्य भागद्वयम् । 'समर्थः' नाम सः, यः कार्याणि यथा करणीयानि तथा करोति, अन्यूनमेव प्रयत्नं करोति । अत्र सः फलं प्राप्नुयादेव इत्यत्र निश्चयः नास्ति । 'परिणामकारी' सः, यः परिणामं जनयति, फलं सम्पादयत्येव । प्रथमः उक्तं करोति, द्वितीयः फलप्राप्त्यर्थं यद् यद् करणीयं तद् सर्वं कृत्वा लक्ष्यं साधयति । अतः अस्माकं कर्तृत्वं यदा फलसिद्धिपर्यन्तं भवति, तदा वयं परिणामकारिव्यक्तित्ववन्तः स्याम ।

### *शक्तिं दौर्बल्यं च अभिजानातु*

विकासम् इच्छुना प्रत्येकं नरेण स्वस्य शक्तयः काः (गुणाः के), तथा च दौर्बल्यानि कानि (अवगुणाः के) इति सूची करणीया । पश्चात् स्वस्य ये उत्तमांशाः सन्ति तेषां वर्धनाय किं करणीयम्, ते इतोऽपि अधिक-फलदायिनः यथा भवेयुः तथा कर्तुं किं करणीयम् इति चिन्तनीयम् । सर्वेषु सर्वे गुणाः न भवन्ति । विद्यमानं गुणं, प्रतिभां, शक्तिं, कौशलं वा वर्धयित्वा, सम्पूर्णविकासं सम्पाद्य तस्मिन् विषये अनुपमेन भवितुं, विकासशिखरं प्राप्तुं च प्रयत्नः करणीयः । स्वस्य यानि दौर्बल्यानि सन्ति, अवगुणाश्च सन्ति, तेषु एकैकं निवारयितुं, न्यूनीकर्तुं वा प्रयत्नः आरब्धव्यः । स्वस्य गुणानां विषये अहङ्कारः न भवेत्, न वा स्वस्य दौर्बल्यानां विषये मनसि भारः, हीनभावना वा । यः तावद् स्वस्य गुणावगुणान् स्वयं ज्ञातुं न शक्नोति, सः अन्यस्य कस्यचित् ज्येष्ठस्य साहाय्यं स्वीकुर्यात् ।

### *सूक्ष्मपरिष्कारेण प्रकाशः*

प्रतिमानिर्माणसमये शिलायाम् अनपेक्षितभागानां निष्कासनेन अपेक्षितः आकारः निर्मितः भवति । परन्तु तावता प्रतिमा सुन्दरी न भवति । शिल्पी

प्रतिमायाः उपरि पुनः पुनः लघुताडनेन सूक्ष्मं परिष्कारं करोति । आकार-सम्पादनकार्यं शीघ्रं भवति । सूक्ष्मपरिष्काराय महान् समयः आवश्यकः भवति । परन्तु तादृशसूक्ष्मपरिष्कारेण एव प्रतिमायाः कान्तिः वर्धते ।

अस्माकं व्यक्तित्वे अपि सूक्ष्मपरिष्कारैः एव आकर्षकता भविष्यति । स्वीयाक्षराणां सौन्दर्यवर्धनाय प्रयत्नः विधेयः । उच्चारणं शुद्धं कर्तुं यत्नः करणीयः । वस्तूनि व्यवस्थितं स्थापनीयानि । वस्त्राणां स्वच्छता रक्षणीया । भोजन-भाषण-क्षालन-शोषण-स्थापन-स्वीकरणादिषु अपि व्यवस्थितता रक्षणीया । तेन, क्रियमाणे कार्ये सुन्दरता, नियतता, व्यवस्थितता इत्यादयः भवेयुः ।

### *भिन्नं कार्यं न, कार्यं भिन्नप्रकारेण*

जीवने महत् किमपि साधनीयं चेत् तादृशं किमपि अपूर्वम्, अतिविशिष्टम्, अकृतपूर्वं, सर्जनात्मकं वा महत् कार्यं स्वीकरणीयम् इति बहवः जनाः चिन्तयन्ति । परन्तु अद्यपर्यन्तं ये महाजनाः अभवन् ते इतरभिन्नं किञ्चित् कार्यं कृत्वा महान्तः न अभवन् । अपि तु स्वेन स्वीकृतं किञ्चित् कार्यम् इतरभिन्नप्रकारेण कृतवन्तः । परिणामतः तस्मिन् क्षेत्रे महतीं साधनां कृतवन्तः । अतः अस्माभिः इदानीं येन प्रकारेण कार्यं क्रियमाणम् अस्ति तस्य अवलोकनं कृत्वा इतोऽपि प्रभाविरूपेण कार्यकरणं कथमिति चिन्तनीयम् । सीमिते समये, विद्यमानैः एव साधनैः १००% कार्यं साधयितुं, तस्मिन् कार्ये १००% गुणवत्ताम् आनेतुं च उपायाः चिन्तनीयाः ।

### *भाषा प्रकृष्टोपकारिका*

विचाराणाम् आदानप्रदानं भाषामाध्यमेन भवति । अस्माकं भाषा सुन्दरी, प्रभावशालिनी च अस्ति चेत् महान् लाभः स्यात् । लेखनकौशलं, भाषणकौशलं चेति उभयमपि अस्माभिः सम्पादनीयम् । तद् कौशलद्वयमपि अभ्यासेन एव आयाति । यथा यथा अस्माकं भाषाज्ञानम्, अध्ययनं, चिन्तनं च अधिकं भवति तथा तथा अस्माकं व्यक्तित्वस्य बहुमुखः विकासः भवति ।

***चिन्तनरीतिः***

यदि मनः प्रसन्नम् अस्ति, तर्हि वयं सर्वाणि कार्याणि कुर्मः, सम्यक् कुर्मः च । मनः खिन्नम् असन्तुष्टं वा अस्ति चेत् अस्माकं प्रेरणा न भवति । अतः मनसः प्रसन्नतारक्षणम् अत्यन्तम् आवश्यकम् ।

जयपराजययोः आरम्भः अपि मनसि भवति । स्नेहस्य युद्धस्य वा आरम्भः अपि मनसि एव भवति ।

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।'

सर्वदा भावात्मकचिन्तनं करणीयम् । अभावात्मकचिन्तनकर्ता जीवने सर्वत्र सदैव कष्टानि एव अनुभविष्यति ।

वयं समस्याकर्तारः न स्याम । समस्याकथयितारः अपि न स्याम । प्रत्युत समस्यापरिहारकर्तृषु अन्यतमाः भवेम ।

'मम अपेक्षानुसारम् इतरैः भवितव्यम्' इति न, 'इतरेषाम् अपेक्षानुसारम् अहं भविष्यामि' इति चिन्तनीयम् ।

मनः बहुधा आत्मसमर्थने, परेषु दोषारोपणे च प्रवर्तते । तेन बुद्धिः, विवेकः च अन्धत्वं प्राप्नोति ! तटस्थरूपेण वस्तुनिष्ठचिन्तनं करणीयम् । 'तेन दोषः कृतः' इति निर्णयात्मकबुद्ध्या चिन्तनं न, अपि तु 'मम दोषः अपि भवितुम् अर्हति' इति धारणया चिन्तनस्य आरम्भः करणीयः । तदा नूतनं जगत् एव दृश्यते ।

***इतरैः सह सम्बन्धः***

अस्मान् परितः ये जनाः सन्ति – गृहे, विद्यालये, कार्यालये, यन्त्रागारे, समाजे वा – तैः सह; तथैव यैः सह वयं जीवामः, कार्यं कुर्मः वा, तैः सह च अस्माकं सम्बन्धः कथम् अस्ति इत्येषः अंशः एव अस्माकं जीवनसफलतायां मुख्यं पात्रं निर्वहति । किं वयं सर्वैः सह स्नेहेन, प्रेम्णा, आत्मीयतया च भवितुं शक्नुमः ? अस्माकं जीवनं, व्यवहारः वा इतरेषां जीवनस्य पूरकम् अस्ति, उत बाधकम् अस्ति ?

'अन्ये माम् अवगच्छेयुः' इति अस्माकम् अपेया भवति । । इतरैः अस्माकम् अवगमनतः पूर्वम् अस्माभिः इतरे अवगन्तव्याः । सर्वान् विषयान्

सम्यक् अवगतवन्तः स्मः इति वयं चिन्तयामः । परन्तु सा अस्माकं स्थितिः कियन्मात्रेण सत्यम् इति अधोनिर्दिष्टकथा ज्ञापयति ।

काचित् युद्धनौका युद्धाभ्यासं करोति स्म । रात्र्याः उत्तरार्धकालः । नौकायाः उपरि नायकः (captain) आसीत्, कश्चन संज्ञादाता (signalman) अपि आसीत् । नौकया समुद्रे अभिमुखम् आगच्छन् कश्चन दीपः दृष्टः । (पुरस्ताद् दीपः आगच्छन् इव दृश्यते इत्यस्य अर्थः - काचित् अन्या नौका अभिमुखम् आगच्छन्ती अस्ति इति ।) संज्ञादाता एतत् नायकं निवेद्य - 'किं करणीयम् ?' इति पृष्टवान् । नायकेन उक्तम् - 'किञ्चित्कालं पश्यतु' इति । दीपः अभिमुखमेव आगच्छति स्म । तदा नायकः संज्ञादातारं सूचयति - 'तां नौकां सूचयतु । सा स्वीयां दिशं १८०° परिवर्तयतु' इति । संज्ञादाता तथैव सूचयति । पुरस्ताद् उत्तरम् आगतं यत् 'भवती १८०° परिवर्तयतु' इति । कोपेन नायकः वदति - 'अहं 'केप्टन' आज्ञां कुर्वन् अस्मि इति सूचयतु ।' तदा उत्तररूपेण संज्ञा आगता - 'अहं 'सीमेन्' सूचयन् अस्मि' इति । तद् ज्ञातवतः नायकस्य कोपस्य सीमा एव न आसीत् । 'मया किमर्थं प्रतिनिवर्तनीयम् ? अहं सम्यगेव व्यवहरन् अस्मि । पुरतः कश्चन मूर्खः अस्ति, पाठयामि तम्' इति चिन्तयन् नायकः वदति - 'अहं युद्धनौका इति सूचयतु' इति । (अर्थात् क्षणार्धेन भवतीं भस्मसात्-कुर्याम् इति ।) संज्ञादाता तथैव यदा सूचितवान् तदा ततः उत्तरम् आगतम् - 'अहं दीपस्तम्भः' (Light House) इति । (समुद्रे आगच्छन्ती नौका तटेन घट्टिता यथा न भवेत् तथा समुद्रतटे भूमौ कश्चन दीपस्तम्भः स्थाप्यते ।) 'दीपस्तम्भः' इति शब्दश्रवणमात्रेण नायकः झटिति मौनेन दिक्परिवर्तनं कृत्वा ततः प्रतिनिवृत्तः ।

अस्मासु बहवः जनाः जीवने सः नौकानायकः इव व्यवहरामः । 'अहं सम्यगेव अस्मि, मम एव समीचीनम्' इति चिन्तयामः । 'दीपस्तम्भ'-परिज्ञानमेव न भवति अस्माकम् !

### *आद्यता कस्य ?*

अस्माभिः करणीयानि कार्याणि बहूनि भवन्ति । इच्छा अपि महती इति

कारणतः कार्यबाहुल्यं भवति । कतिचन त्वरितं करणीयानि, कतिचन प्रमुखकार्याणि, कतिचन बहुप्रमुखाणि, कतिचन अनिवार्याणि, कतिचन अकस्मात् आपतितानि - एवम् आवली दीर्घा भवति । तदा किं करणीयम्, किं न करणीयम् इति न ज्ञायते । तादृशे समये करणीयानां सर्वेषां सूचीं कृत्वा, पुनः आद्यतानुसारं कार्याणां पुनर्विभागः करणीयः । योजना करणीया । स्वस्य समये कञ्चन एव भागं सद्यःकरणीयानां कृते व्ययीकृत्य शेषभागं भाविजीवनस्य सज्जतायाः निमित्तं ये यापयन्ति, ते सर्वदा जयशालिनः भवन्ति । एतद् विहाय अतिनिद्रा-व्यर्थजल्पन-कलह-परदूषण-छिद्रान्वेषणादि-सम्भाषणैः ये कालं यापयन्ति ते अधिकं साधयितुं न शक्नुयुः ।

### *इदानीम् !*

बहूनां मनसि 'करणीयम्' इति विचारः आगच्छति । परन्तु प्रत्यक्षतः यदा करणीयम् आपतति तदा 'अनन्तरं करोमि', 'श्वः करिष्यामि' इति वदन्तः ते कार्यारम्भमेव न कुर्वन्ति । एषः स्वभावः बहुषु दृश्यते । सुचिन्तितस्यापि कार्यस्य अनारम्भस्य कारणम् एतदेव । अतः अनारम्भस्य कारणम् एतदेव । अतः अनारम्भस्वभाववन्तः ते सर्वे अपि 'इदानीमेव' इति शब्दं स्मरेयुः ।

### *नवचैतन्यप्रवाहाय*

संस्कृतज्ञानाम् अस्माकं व्यक्तित्वम् अवलम्ब्य संस्कृतस्य अपि भविष्यम् अस्ति । संस्कृतज्ञेषु अस्मासु क्रियाशीलता भवति चेत् संस्कृतक्षेत्रे अपि गतिशीलता भवति । अस्माकं जाड्यम् अपगतं चेत् संस्कृतक्षेत्रे चैतन्यनिर्माणं भवति । वयं यदि नेतृत्वगुणसम्पन्नाः भवेम तर्हि संस्कृतं पुनः राष्ट्रस्य नेतृत्वं कुर्यात् !



[सम्भाषणसन्देशः - सप्टेम्बर्, १९९९]

# १८. जनगणनाः संस्कृतं च

त्वरितं चिन्तनीयः कश्चन विषयः अस्ति । जनवरिमासे भारते जन-गणना भविष्यति । दशभ्यः वर्षेभ्यः पूर्वं (१९९१ तमे वर्षे) कृतायाः जनगणनायाः अनुसारं भारते ४९,७३६जनाः संस्कृतभाषिणः आसन् । ततोऽपि पूर्वतनगणनायां ६,१०६ जनाः, तत्पूर्वतनगणनायां च २,२१२ जनाः संस्कृतभाषिणः आसन् । (अधिकविवरणार्थं सन्देशस्य आगस्टमासीया सञ्चिका दृश्यताम्)

प्रजातन्त्रे संख्यायाः महत् स्थानम् अस्ति । यद्यपि अद्यत्वे अल्पसंख्याकाः विशेषाधिकारान् सौलभ्यानि च प्राप्नुवन्तः सन्ति, तत्र कारणं भिन्नं, सर्वविदितं च । यद्यपि संस्कृतविषये जनादरः महान् अस्ति, तथापि संस्कृतस्य कश्चन प्रमाणितः आधारः नास्ति । अतः अस्माभिः संस्कृतस्य सांविधानिकं बलं कथं वर्धनीयम् इति अवश्यं चिन्तनीयम् । तत्र तु संख्याबलमेव प्रकृष्टोपकारकम् ।

शिक्षणे तावत् संस्कृतभाषा Classical language इति नाम्ना अरेबिक्-पर्षियन्-पालि-प्राकृतादिभिः सह अस्ति । संविधानस्य अष्टम-धारायां सूचितासु अष्टादशसु आधुनिकभाषासु (याश्च प्रादेशिकभाषाः सन्ति) संस्कृतभाषा अस्ति, न तु अरेबिक्-पर्षियन्-पालि-प्राकृतादयः भाषाः । संविधानकर्तारः संस्कृताभिमानेन संस्कृतम् आधुनिकभाषासु योजितवन्तः, परन्तु शिक्षणे तावत् संख्याप्राबल्याभावकारणतः संस्कृतेन प्राप्तव्यम् उचितं स्थानं न प्राप्तम् ।

'संस्कृतं व्यवहारे नास्ति' इति वादम् अपि परिमार्ष्टुं जनगणनासांख्यिकं कश्चन आधारः भवितुम् अर्हति । यथा गते दशके केन्द्रीय-माध्यमिक-शिक्षाबोर्ड(CBSE)विरुद्धं सर्वोच्चन्यायालये संस्कृतसम्बन्धे अभियोगः

जातः तथा अग्रे कदाचित् प्रतिकूलपरिस्थितौ उपस्थितायां न्यायालयः गन्तव्यः भविष्यति चेत् तदर्थं संस्कृतमातृभाषिजनानां संख्याधिक्यस्य प्रमाणं लाभाय भवेत् । वार्तापत्रेषु पत्रिकासु च संस्कृतपरकस्य वादस्य उपस्थापनाय अपि संख्याबलस्य प्रमाणानि आवश्यकानि । केन्द्रसर्वकारस्य राज्यसर्वकाराणां च वार्षिकबजेट्मध्ये संस्कृतार्थम् अधिकवित्तस्य प्रबन्धनाय अपि संख्याबलस्य समर्थनम् अपेक्षितम् ।

अतः अस्माभिः सर्वैः अपि जनगणनावसरे 'अस्माकं मातृभाषा संस्कृतम्' इति लेखयितव्यम् । तत्र काचित् सावधानता आवश्यकी । जनगणनार्थं यः आगमिष्यति सः तस्य एव ग्रामस्य अथवा क्षेत्रस्य शिक्षकः, सर्वकारीयकर्मचारी वा स्यात्; स च भवन्तं स्वयं जानीयात्, अतः भवतः मातृभाषा का इति अपृष्ट्वा सः स्वयमेव पत्रके स्थानीयभाषां लिखेत् । एतस्मात् अस्माभिः स्पष्टं सूचनीयं यत् 'मातृभाषा संस्कृतम् इति लिखतु' इति ।

समयः अत्यल्पः अस्ति इति कारणतः एतस्य लेखस्य पाठकाः भवन्तः सर्वेऽपि तत्क्षणादेव कार्यशीलाः भवेयुः । स्वपरिचितान् सर्वान् अपि जनान् मुखेन, दूरभाषया, पत्रद्वारा च एतदर्थं निवेदयेयुः । उपरिसूचिता सावधानता अपि ज्ञापनीया । एतदर्थं सर्वैरपि समयव्ययः धनव्ययः चापि करणीयः ।

एतादृशकार्ये प्रवृत्तान् अस्मान् उद्दिश्य जनाः विविधान् प्रश्नान् कुर्वन्ति । यथा - 'संस्कृतं मातृभाषा इति वयं यत् लेखयामः तत् असत्यं खलु ?' इति ।

तदर्थमपि वयं सज्जाः स्याम । 'वयम् अस्माकं मातुः सकाशात् एतां भाषां न पठितवन्तः स्याम, तथापि सर्वासां भारतीयभाषाणां मातृभाषा संस्कृतमेव, अन्याः भाषाः प्रादेशिक्यः इति कारणतः भारतस्य मातृभाषा वास्तविकरूपेण संस्कृतमेव' - इत्येवंरूपेण बहवः संस्कृतपरकाः वादाः अस्माभिरेव चिन्तनीयाः ।

किञ्च, वयं वास्तविकार्थेन संस्कृतं मातृभाषां कर्तुम् उद्युक्ताः प्रयत्नशीलाश्च । तत्र मातृभाषा इति उद्घोषणं तस्यां दिशि प्रथमं सोपानम् ।

सङ्कल्पतः एव खलु कार्यारम्भः ...?

'संस्कृतं मातृभाषा इति घोषणेन तत्तत्प्रान्तीयभाषाणां गतिः का भवेत् ?' इति केचन पृच्छन्ति । कतिपयसहस्रजनाः लक्षजनाः वा एवं घोषयन्ति चेत् प्रादेशिकभाषाणां कापि हानिः न भविष्यति । तासां भाषाणां भाषिणां संख्यायाः पुरतः प्रकृतं तु संस्कृतभाषिणां संख्या अगण्या इव अस्ति । यदा तादृशी परिस्थितिः आगमिष्यति यत्र प्रादेशिकभाषाणां कष्टं भविष्यति, तदा अस्माकं नीतिविषये पुनर्विमर्शं करिष्यामः ।

स्वतन्त्रभारते अद्यपर्यन्तं संस्कृतस्य पराभवे प्रमुखतया कारणद्वयम् । तच्च न्यूनताद्वयम् । संस्कृतज्ञानाम् अस्माकं रणनीतेः (स्ट्रेटजी), कार्यनीतेः, कूटनीतेः, दृष्टेः, दूरदृष्टेः, योजनायाः वा अभावः इत्येषा प्रथमा न्यूनता । सङ्घटितप्रयत्नस्य सामूहिकसक्रियतायाः वा अभावः इत्येषा द्वितीया न्यूनता । एतस्य लेखस्य प्रत्येकं वाचकः यदि एतं विषयं स्वीकृत्य क्रियाशीलः भविष्यति, तर्हि तस्य कर्मण्यता संस्कृतक्षेत्रे चैतन्यम् उत्पादयेत्, संस्कृतज्ञेषु सामूहिकीम् इच्छाशक्तिं च वर्धयेत् ।

नष्टः अवसरः पुनः न आगमिष्यति । अतः अस्माभिः वर्तमानः अवसरः न त्यक्तव्यः । अन्यच्च, इदानीं यदि वयं प्रयत्नं कृत्वा संस्कृतमातृभाषिजनानां संख्यां कतिपयलक्षपरिमितां करिष्यामः, तर्हि सा संख्या अस्माकं शक्तेः मापिका भवेत्, तेन क्रमेण अग्रिमजनगणनासु अस्माकं प्रगतेः मापनमपि शक्यम् । त्वर्यताम् ....!



[सम्भाषणसन्देशः - जनवरी, २००१]

# १९. आम्बेडकरः संस्कृतेन भाषते स्म !

भीमराव आम्बेडकरः संस्कृतं पठितुम् इष्टवान् आसीत्, परन्तु सः अस्पृश्यः इति कारणतः कश्चन संस्कृतज्ञः आम्बेडकरं संस्कृतं पाठयितुं निराकृतवान् - इति विषयः तु आम्बेडकरमहोदयस्य जीवनसम्बन्धिपुस्तकेषु लिखितः अस्ति, सः विषयः प्रचारे अस्ति अपि । 'भारतस्य राजभाषा संस्कृतं भवेत्' इति संविधानसभायां शोधप्रस्तावः आनीतः आसीत्, यस्य प्रस्तावस्य कृते हस्ताक्षरकर्तृषु प्रस्तावोपस्थापकेषु च डा॰ आम्बेडकरः अपि अन्यतमः आसीत् । अयं विषयः अपि कतिपयवर्षेभ्यः पूर्वं ज्ञातः आसीत् । परम् इदानीं कश्चन नूतनः विषयः प्रकाशम् आगतः अस्ति ।

संविधानसभायां यदा राजभाषासम्बन्धे चर्चा प्रवर्तते स्म तदा डा॰ आम्बेडकरः, पण्डितलक्ष्मीकान्तमैत्रः च परस्परं संस्कृतेन वार्तालापं कृतवन्तौ ! तत्सम्बन्धे 'आज' इति हिन्दीदिनपत्रिकायां १९४९तमे वर्षे सप्टम्बर्मासस्य १५ दिनाङ्के प्रकाशिता वार्ता - "डा॰ आम्बेडकर का संस्कृत में वार्तालाप" इति या अस्ति तस्याः प्रतिकृतिः अत्र पार्श्वे एव दत्ता अस्ति । एषा एव वार्ता प्रयागतः प्रकाश्यमानायां THE LEADERनामिकायाम् आंग्लदिनपत्रिकायां १९४९तमे वर्षे सितम्बर-मासस्य १३ दिनाङ्के मुखपृष्ठे प्रकाशिता आसीत् । तस्याः शीर्षकम् आसीत् "THEY CONFER IN SANSKRIT" इति । सा अपि दत्ता अस्ति । देहल्यां राष्ट्रिये अभिलेखागारे शताधिकवर्षेभ्यः सर्वासां पत्रिकाणां समाचारपत्राणां च 'मैक्रो फिल्म' कृत्वा संरक्षितवन्तः सन्ति । तानि सर्वाणि दृष्ट्वा अस्माभिः बहु अन्वेषणं, गवेषणं च कृत्वा एताः महत्त्वभूताः वार्ताः प्राप्ताः ।

## The National Herald
## 11th Sept 1949

### AMBEDKAR FAVOURS SANSKRIT

### Amendments To Article On Language

NEW DELHI, Sept. 10.—India's Law Minister, Dr. B. R. Ambedkar, is among those who have sponsored Sanskrit as the official language of the Indian Union. One of his supporters is Dr. B. V. Keskar, India's Deputy Minister for External Affairs, another Mr. Naziruddin Ahmed.

Questioned about this move, Dr. Ambedkar asked a PTI correspondent this evening: "What is wrong with Sanskrit?"

The amendment will be taken up by the Constituent Assembly when the question of official language is considered by the House.

Other signatories are: Mr. Lakshmi Kanta Maitra (West Bengal), Mr. T. T. Krishnamachari (Madras), Mr. G. S. Guha (Tripura-Manipur and Khasi States), Mr. C. M. Poonacha (Coorg), Mr. V. Ramaiah (Pudukottah), Mr. V. I. Munuswamy Pillay (Madras), Mr. Kallur Subba Rao (Madras), Mr. V. C. Kesava Rao (Madras), Mr. D. Govinda Doss (Madras), Dr. P. Subbarayan (Madras), Dr. V. Subramaniam (Madras), Mrs. G. Durgabai (Madras) and Mrs. Dakshayani Velayudhan (Madras).

The amendment reads:

301A. (1) "The official language of the Union shall be Sanskrit."

(2) Notwithstanding anything contained in clause one of this article, for a period of 15 years from the commencement of this constitution, the English language shall continue to be used for all the official purposes of the Union for which it was being used at such commencement: provided that the President may, during the same period, by order authorise for any of the official purposes of the Union the use of Sanskrit in addition to the English language.

(3) Notwithstanding anything contained in this article, Parliament may by law provide for the use of the English language after the said period of 15 years for such purposes as may be specified in such law.

Consequential changes substituting Sanskrit for Hindi have also been suggested for the rest of the article.—PTI

## Statesman
## 11th Sept 1949

### AMBEDKAR AMONG SPONSORS

### SANSKRIT PROPOSED AS OFFICIAL LANGUAGE

India's Law Minister, Dr B. R. Ambedkar, is among those who have sponsored Sanskrit as the official language of the Indian Union. One of his supporters is Dr B. V. Keskar, India's Deputy Minister for External Affairs, another Mr Naziruddin Ahmed.

Questioned about this move, Dr Ambedkar asked a PTI correspondent: "What is wrong with Sanskrit?"

The amendment will be taken up by the Constituent Assembly when the question of official language is considered.

Other signatories are: Pandit Lakshmi Kanta Maitra (West Bengal), Mr T. T. Krishnamachari (Madras), Mr G. S. Guha (Tripura-Manipur and Khasi States), Mr C. M. Poonacha (Coorg), Mr V. Ramaiah (Pudukottah), Mr V. I. Munisawmy Pillay (Madras), Kallur Subba Rao (Madras), Mr V. C. Kesava Rao (Madras), Mr D. Govinda Doss (Madras), Dr P. Subbarayan (Madras), Dr V. Subramanian (Madras), Mrs G. Durgabai (Madras), and Mrs. Dakshayani Velayudhan (Madras).—PTI.

## हिन्दुस्तान (हिन्दी)
## १२ सितम्बर् १९४९

### राजभाषा संस्कृत हो

### प्रस्तावकों में डा० अम्बेडकर भी

नई दिल्ली १०, सितम्बर। विधान-परिषद के जिन सदस्यों ने संस्कृत को भारत संघ की राजभाषा बनाने का प्रस्ताव रखा है, उनमें भारत के कानून मंत्री डा० भीमराव अम्बेडकर भी हैं। आपके समर्थकों में उपविदेश मंत्री डा० बी० वी० केसकर तथा नजीरुद्दीन अहमद भी हैं।

इसके विषय में प्रश्न किए जाने पर डा० अम्बेडकर ने पी० टी० आई० के संवाददाता से कहा—क्यों! संस्कृत में क्या दोष है?

विधान परिषद राजभाषा पर विचार करते समय इस संशोधन पर भी विचार करेगी। संशोधन पर हस्ताक्षर करनेवालों में पं० लक्ष्मीकान्त मैत्र, टी० टी० कृष्णमाचारी आदि १३-१४ व्यक्ति और हैं।

संशोधन में कहा गया है:—भारत संघ की राजभाषा संस्कृत होगी। १५ वर्ष तक अंग्रेजी भी राजभाषा रहेगी। बाकी सब प्रस्ताव वैसा ही है, जैसा हिन्दी के विषय में है। केवल हिन्दी के स्थान पर संस्कृत शब्द रख दिया गया है।

## The Hindu
## 11th Sept 1949

### INDIA'S STATE LANGUAGE

### CLAIMS OF SANSKRIT

### AMENDMENT TO BE MOVED TO ARTICLE

NEW DELHI, Sept. 10.

India's Law Minister, Dr. B. R. Ambedkar, is among those who have sponsored Sanskrit as the official language of the Indian Union. One of his supporters is Dr. B. V. Keskar, India's Deputy Minister for External Affairs, another Mr Naziruddin Ahmed.

Questioned about this move, Dr. Ambedkar asked a P.T.I. correspondent this evening "What is wrong with Sanskrit?" An amendment seeking Sanskrit to be India's official language will be taken up by the Constituent Assembly when the question of official language is considered by the House.

Other signatories to the amendment are: Pandit Lakshmikanta Maitra (West Bengal), Mr. T. T. Krishnamachari (Madras), Mr. C. S. Guha (Tripura-Manipur and Khasi States), Mr. C. M. Poonacha (Coorg), Mr. V. Ramaiah (Pudukkottam), Mr. V. I. Muniswamy Pillai (Madras), Mr Kallur Subba Rao (Madras), Mr. V. C. Kesava Rao (Madras), Mr. D. Govinda Das (Madras), Dr. P. Subbarayan (Madras), Dr V. Subramaniam (Madras), Mrs. G. Durgabai (Madras) and Mrs. Dakshayani Velayudhan (Madras).

The amendment reads: Article 310 (1) The official language of the Union shall be Sanskrit.

"(2) Notwithstanding anything contained in Clause I of this Article, for a period of 15 years from the commencement of this constitution, the English language shall continue to be used for all the official purposes of the Union for which it was being used at such commencement: provided that the President may, during the said period, by order authorise for any of the official purposes of the Union the use of Sanskrit in addition to the English language.

"(3) Notwithstanding anything contained in this Article, Parliament may by law provide for the use of the English language after the said period of 15 years for such purposes as may be specified in such law.".

Consequential changes substituting Sanskrit for Hindi have also been suggested for the rest of the Articles.—PTI.

NO AGREEMENT IN SIGHT

## आज
## १५ सितम्बर् १९४९

### डा० अम्बेडकरका संस्कृतमें वार्तालाप

नयी दिल्ली, १४ सितम्बर। केन्द्रकी गोष्ठीवार्तामें आज बड़ी उत्सुकता दिखाई दे रही थी। भाषाके प्रश्नपर एक-एक गुट जोरोंसे वार्ता कर रहे थे। लोगोंकी दिलचस्पी इतनी बढ़ी की जब अम्बेडकर तथा पण्डित लक्ष्मीकांत मैत्र आपसमें संस्कृतमें बातचीत करने लगे। स्मरण रहे कि आप दोनोंने संस्कृतको राजभाषा माननेके लिए संशोधन उपस्थित किये हैं।

## The statesman
## Sept 15, 1949

...ed an Indian language, it is bound to bring us together because our tradition is the same, our culture is the same and everything that goes to make up our civilization is the same.

The House adjourned until Thursday.—PTI.

### SANSKRIT SCHOLARS' DEMAND

Sanskrit scholars from all over India have urged the Constituent Assembly "to drop the controversial issue of the national language" and adopt Sanskrit as the Union's language.

A meeting of the scholars convened in New Delhi by Mr. M. S. Saraswat, a well-known Sanskrit scholar, passed a resolution which stated: "Sanskrit is not only the mother of all the regional languages of India but the mother of all the languages of the world."

The meeting set up a new organisation, the Akil Bhartiya Sanskrit Prachar Mahaparishad for the propagation of Sanskrit. The organisation will have among its objects the establishment of a world Sanskrit university and an international Sanskrit library in Delhi.—PTI.

## The Leader (Allahabad)
## Sept 13, 1949

### THEY CONFER IN SANSKRIT

NEW DELHI, Sept 12.—The lobbies were the centres of considerable interest today when animated group discussions were being held on the language issue.

An incident of agreeable surprise was the conversation in Sanskrit between Dr. Ambedkar and Pandit Lakshmi Kanta Maitra, both of whom have given notice of an amendment suggesting Sanskrit as the official language of the Union.—P.T.I.

एतैः नवप्राप्तप्रमाणैः ज्ञायते यत् डा॰ आम्बेडकरः न केवलं संस्कृतस्य राजभाषात्वं समर्थितवान्, न केवलं सः संस्कृतं जानाति स्म, अपि तु सः संस्कृतेन भाषते स्म इति ! (यतः सः संविधानसभायां संस्कृतेन वार्तालापं कृतवान्) तत्र संविधानसभायां संस्कृतेन वार्तालापस्य तस्य उद्देशः प्रायशः संस्कृतस्य सरलत्वस्य व्यावहारिकत्वस्य सम्भाषणयोग्यत्वस्य च प्रतिष्ठापनम् एव स्यात् ।

संविधानसभायां 'भारतस्य राजभाषा का भवेत्' इति चर्चासमये 'हिन्दी भवेत्', 'आंग्लभाषा भवेत्', 'संस्कृतं भवेत्' इति वादत्रयम् प्रमुखतया आसीत् । 'अन्याः प्रादेशिक्यः भाषाः भवेयुः' इत्यपि तत्तत्प्रदेशजनाः वादं कुर्वन्ति स्म । हिन्दी-आंग्लयोः समर्थकाः अत्यधिकाः आसन् । तस्मात् मुन्शी-अय्यङ्गार्सूत्रम् (Munshi Iyyangar-Formula) इति सूत्रानुसारं 'हिन्दी राजभाषा भवेत्, आंग्लभाषा पञ्चदश वर्षाणि यावत् राजभाषरूपेण अनुवर्तिष्यते' इति विचारः आसीत् ।

१९४९तमवर्षस्य अगस्ट-सप्टम्बरमासयोः किं किं जातम् इति एतद्विषये इतोऽपि अध्येतव्यम् अस्ति । १९४९तमे वर्षे अगस्टमासस्य ५ दिनाङ्के कांग्रेस्कार्यसमितौ डा॰ राजेन्द्रप्रसादस्य अध्यक्षतायां भाषाद्वयशिक्षण-सम्बन्धे कश्चन निर्णयः जातः आसीत् ।

१९४९तमवर्षस्य सप्टम्बरमासस्य पूर्वार्धे भाषानीतिम् अधिकृत्य राष्ट्रनायकानां मध्ये महती चर्चा आसीत् । All Indian Schedule Caste Federation इत्यस्य अखिलभारतीयकार्यकारिसमितेः गोष्ठ्यां संस्कृतं राजभाषा भवेत् इति प्रस्तावः पारितः भवेत्, तादृशी अभियाचना करणीया इति डा॰ भीमराव् आम्बेडकरः बहु प्रयत्नम् अकरोत् । परं तदा तत्र श्री बि.पि मौर्यः इत्यादयः युवकार्यकर्तारः तस्य महान्तं विरोधं कृतवन्तः, सभात्यागस्य घोषणां कृतवन्तः । तदा डा॰ आम्बेडकरः स्वीयं प्रस्तावं प्रतिस्वीकृतवान् । अनन्तरं सः तस्मिन् दिने सायङ्काले पत्र-कारगोष्ठीम् आहूय स्वीयान् विचारम् उक्तवान् ।

संविधानसभायां काङ्ग्रेस्दलस्य ये सदस्याः आसन् ते भाषानीतिविषये

चिन्तयितुं १९४९तमवर्षस्य सितम्बरमासस्य २१,२२,२३,२४,२५ दिनाङ्केषु गोष्ठीं कृतवन्तः । अन्ते २५तमे दिनाङ्के Munshi Iyyangar-Formula सन्दर्भे यदा मतदानम् अभवत् तदा परतया विरोधितया च ७७,७७ इति समानमतानि (Tie) प्राप्तानि अभवन् । 'हिन्दुस्तान'-पत्रिकायां तदानीन्तनकाले प्रकाशितायाः वार्तायाः अनुसारं मतदानसमये अध्यक्षस्थाने स्थितः श्रीसत्यनारायणन् स्वीयं निर्णायकं मतं (Casting vote) न दत्तवान् । अन्ते एवं निर्णीतं यत् संविधानसभायां यदि मतदानं भवेत् तर्हि सर्वेऽपि अन्तःसाक्ष्यनुसारं मतदानं कुर्युः इति ।

१९४९तमवर्षस्य सप्टम्बर्मासस्य १६दिनाङ्कस्य TRIBUNE इत्येतस्याम् आंग्लदिनपत्रिकायाम् संस्कृतपरतया "ONE LANGUAGE" इति सम्पादकीयं लिखितम् आसीत् ।

संविधानसभायां संस्कृतपरप्रस्तावोपस्थापयिता प्रमुखः च आसीत् प्रो॰ निजामुद्दीन महम्मदः । सः संविधानसभायां संस्कृतस्य पक्षं स्वीकृत्य भाषणमपि कृतवान् आसीत् । प्रस्तावस्य कृते हस्ताक्षरकर्तृषु बहवः तमिळुनाडुप्रदेशीयाः, दक्षिणदेशीयाः अपि आसन् । तदा तमिळुनाडु संस्कृतं स्वीकर्तुं सिद्धम् आसीत् ।

तेषु दिवसेषु संस्कृतज्ञाः अपि कञ्चित् प्रयत्नं कृतवन्तः । यथा १९४९तमे वर्षे सितम्बरमासस्य २५ तमदिनाङ्कस्य The Statesman इत्येतस्याः दिनपत्रिकायाः वार्तानुसारं डा॰ सारस्वतमहोदयस्य अध्यक्षतायां जातायां संस्कृतज्ञानाम् अखिलभारतीयसभायां 'संस्कृतं राजभाषा भवेत्' इति अभियाचना आसीत् । तथैव वाराणस्यामपि सम्मेलनं जातमिति वार्ता अस्ति ।

परं संस्कृतज्ञानां संघटितशक्तिः नासीत् । किञ्च संस्कृतस्य सरलरूपस्य श्रावयितारः सम्भाषणकर्तारः अधिकमात्रेण न आसन् इतिं कारणतः संस्कृतविषये नेतॄणां मनस्सु अन्ये एव विचाराः आसन्, भयं चापि आसीत् । अन्ते संस्कृतेन प्राप्तव्यं स्थानं प्राप्तम् । संविधानस्य अष्टमसूच्यां संस्कृतस्य नाम प्रविष्टं, हिन्दीभाषया राजभाषारूपेण प्रधानतया संस्कृततः शब्दः

स्वीकरणीयाः, केन्द्रशासनस्य विविधभागानां, मन्त्रालयानां संस्थानां च ध्येयवाक्यानि संस्कृतभाषया भवेयुः - इति त्रीणि 'Consolation Prize' प्राप्तानि !

यद्वा भवतु । अद्य पुनः संस्कृतं राजभाषा भवेत् अभियाचना नैव कर्तव्या। क्रियते चेत् सा मूर्खतायै भवेत् । वयं कार्यकर्तारः संस्कृतसम्भाषणमाध्यमेन संस्कृतप्रचारकार्यं कुर्मः चेत् तेनैव सर्वम् अभीष्टं साधितं भवेत् । डा॰ आम्बेडकरः संस्कृतेन भाषते स्म इति विषयस्य प्रचारेण अपि समाजे किञ्चित् विचारान्दोलनं भवेत् !

❑❑

[सम्भाषणसन्देशः - जून्, २००३]